श्रेष्ठि-देवचन्द्र लालभाई-जैनपुस्तकोद्धार-ग्रन्थाङ्कः ९.

श्रीतपागच्छाधिराजश्रीसोमसुन्दरसूरिविनेयश्रीजिनकीर्तिसूरिविरचितः

# श्रीदानकल्पद्रुमः ।



संशोधकः—श्रीमद्वल्लभविजयशिष्यमुनि-श्रीललितविजयः ।

ख्यापकः—नगीनभाई घेलाभाई-जव्हेरी,-एकः कार्यवाहकः ।

इदं पुस्तक मुम्बय्या शाह नगीनभाई घेलाभाई-जव्हेरीबाजार इत्यनेन निर्णयसागरमुद्रणमन्दिरे कोलभाटवीथ्या २३ तमे गृहे

वा. रा. घाणेकरद्वारा मुद्रयित्वा प्रकाशितः ।

प्रति ५००.

वीराब्द २४३८. विक्रम १९६८. क्राईस्ट १९१२.

निष्क्रयः ६ आणकाः

# आ संस्था तरफथी मुद्रित थयेल ग्रन्थोनुं सूचीपत्र.

| ग्रन्थाङ्क. | नामादिक | मूल्य—रुपिया |
|---|---|---|
| १ | श्रीवीतरागस्तोत्रम्—श्रीमद्धेमचन्द्राचार्यकृतमूल, प्रभानन्दसूरिकृतविवरण, श्रीविशालराजशिष्यकृताऽवचूरिसमेतम्. | ० ८ ० |
| २ | श्रीश्रमणप्रतिक्रमणसूत्रवृत्तिः—पूर्वाचार्यकृता | ० १ ६ |
| ३ | श्रीस्याद्वादभाषा—श्रीमच्छुभविजयगणिकृता | ० १ ६ |
| ४ | श्रीपाक्षिकसूत्रम्—आमा पाक्षिकसूत्र अने खामणापर श्रीयशोदेवसूरिकृतटीकानो समावेश करवामा आवेल छे. | ० ६ ० |
| ५ | श्रीअध्यात्ममतपरीक्षा—न्यायाचार्य-श्रीयशोविजयप्रणीतटीकायुक्त, अन्ते छुटुं मूल पण प्रसिद्ध करवामा आवेल छे. | ० ६ ० |
| ६ | श्रीषोडशकप्रकरणं—श्रीहरिभद्रसूरिकृतमूल, अने श्रीमद्यशोभद्र, तथा श्रीयशोविजयजीकृत बन्ने टीकाओ सहित अने मूलमात्र पछाडी जूदुं लेवामा आवेल छे. | ० ६ ० |
| ७ | श्रीकल्पसूत्रवृत्तिः—श्रीविनयविजयोपाध्यायकृत-'सुबोधिका' टीकासहिता | ० १२ ० |
| ८ | श्रीवन्दारुवृत्त्यपरनाम्नी श्राद्धप्रतिक्रमणसूत्रवृत्तिः—श्रीमद्देवेन्द्रसूरिवरचिता. | ० ८ ० |
| ९ | श्रीदानकल्पद्रुमः—परमगुरुश्रीसोमसुन्दरशिष्यश्रीजिनकीर्तिसूरिकृतः. | ० ६ ० |

वेचाता मळवानुं ठेकाणुं—

**मगनलाल वेलचंद, शेठ देवचन्द लालभाई पुस्तकोद्धार फण्ड ऑफिस.**

**C/o शेठ देवचन्द लालभाई धर्मशाला, बडेखा चकलो. सुरतसिटी.**

## PREFACE.

This life of *Dhanna* or *Dana Kalpa Druma*, is written in nine cantoes by Shree *Jinkirtisuri* in plain yet impressive language with a view to impart religious instruction to the students of poetry

It comprises nearly twelve hundred verses. The author was a disciple of the eminent *Shree Soma Sunder Suri*, in the line of *Shree Deva Sunder Suri* of 'Tapa Gachha' or branch.

The religious observances for the clergy and the laity are always necessarily differently laid down Jainism attaches the utmost importance to the universally acceptable truth of being clement and ruthful to all living animals, yet the laity by being absorbed into worldly affairs cannot be as rigorous and austere as the priests can be in that direction, whereas the laity on the contrary being so occupied is qualified for alms-giving. So charity is one of the most important religious practices for the laity There are many ways of benevolence and generosity, one of them being to give in alms the necessary materials to the priests who have foregone worldly pleasures and possessions. The life of Dhanna was charecterised by this trait, and it is lucidly brought out in this work The proportion-

ately less advantage, and harm to one's soul as consequence for being sorry for giving something in alms, through Dhanna's three brothers, is also described

The life of Dhanna is also written by two other poets, which we hope to bring out in due course.

The time of this author cannot be precisely ascertained, as there is no reference whatsoever to it in this work, yet from the geneology of the priests and the time of his Guru or master, it can safely be deduced that he existed in the fifteenth century of the Vikrama era.

We do not know if he has written any other works than this, and we shall be thankful if any person informs us of his other works if there are any.

This work is the 'ninth' in the series published by this Fund We are indebted to *Shree Lalitvijayji*, a disciple of Shree Vallabhvijayji, in the line of Shree Vijayanand Suri alias Atmaramji for going through the proof-sheets, and for supplying us the original manuscript. We are also thankful to Shree *Sagargachha Pravachan Pujak Sabha* of Bombay, Pydhoni, for likewise supplying us another copy of the manuscript which was useful for comparison.

*August 1912*
325, JAVERI BÂZÂR,
BOMBAY

NAGINBHÂI GHELABHÂI JAVERI
for
DEVCHAND LÂLBHÂI PUSTAKODDHÂR FUND

"आचार्यपदञ्चैकं, तनु तनुकान्त्यस्तकनकजनकभुवः ।
"न्यायोपार्जितमर्थं, यथा कृतार्थं प्रकुर्वे स्वम् ॥"
"ओमित्युक्ते गुरुणा, लेखान् स प्राहिणोच्चतुर्दिक्षु ।"
"लोका भुवि प्रतीताः, संख्यातीताः समाजग्मुः ॥"
"तेषां पुरप्रवेशो-त्सवपूर्वमपूर्वभक्तियुक्तिमथो ।"
"श्रीचम्पकोऽप्यकार्षी-द्धर्षोत्कर्षेण भृतहृदयः ॥"
"श्रीगच्छनाथसूरि-र्भूरिगुणः प्रगुणसूरिमंत्रबलः ।"
"सुदिनेऽथ लग्नसमये, विदधे बिम्बप्रतिष्ठां सः ॥"
"श्रीसूरिपदञ्चादा-च्छ्रीजिनकीर्त्त्याह्ववाचकेन्द्राणाम् ॥"

श्रीसोमसुन्दरसूरिणाञ्च समयस्सुनिश्चित एव यतस्तेषां जन्म ( १४३० ) दीक्षा ( १४३७ ) वाचकपदं ( १४५० ) आचार्यपदं ( १४५७ ) स्वर्गमनञ्च ( १४९९ ) संवत्सरे ) तत्रैव सोमसौभाग्यकाव्ये व्यावर्ण्यते स्फुटतया पण्डित-प्रतिष्ठासोमैस्तथाहि—

मण्डिताः पण्डिता मोक्षैकगृहीतस्वार्थाः गृहीतपरमार्थाः सुमतयो यतयो भवन्ति ।

उक्तञ्च सुविहितहितशासनविदितसन्मार्गरहस्यसमस्तविशुद्धसिद्धान्तार्थज्ञसदोद्यद्विहारकरणप्रवणश्रीमद्देवचन्द्रसूरिपादप-

द्मोपजीविश्रीमदणहिल्लपत्तनाधिपत्रिभुवनपालभूपालतनयपरमार्हतकुमारपालक्ष्मापालवितीर्णकलिकालसर्वज्ञविरुदधारिक्-

पापीयूषयूषवाहिनीप्रवाहप्ररूढप्रौढकल्लोलमालाप्लावितस्वान्तप्रकटदुर्निग्रहकदाग्रहतमस्तोमसंहरणप्रवणैः सूरिश्रीहेमचन्द्र-

पादैः स्वोपज्ञयोगशास्त्रे ।

"भिक्षार्थं भोजनकाले उपस्थितेभ्यः साधुभ्यो दानं विश्राणनं चतुर्विधस्याशनपानखाद्यस्वाद्यरूपस्याहारस्य

पात्रस्यालाव्वादेराच्छादनस्य वस्त्रस्य कम्वलस्य वा सद्मनो वसतेरुपलक्षणात्पीठफलकशय्यासंस्तारकादीनामर्पणं ति"

अस्य च दानकल्पद्रोर्निर्मातारः पूज्यपादाः श्रीमज्जिनकीर्तिसूरिवराः कदा कतमं वा भूमण्डलं मण्डयामासुरिति

जिज्ञासायां यद्यपि व्यक्ताक्षराभावाज्जन्ममातृपितृदीक्षासमयादि निर्णेतुं न शक्यते, तथापि श्रीमत्पूज्यपादश्रीसोम-

सुंदरसूरिसत्क एवैषां सत्तासमयः प्रतीयते, यतस्तैरेव संघनाथैरिमे देवकुलपाटकवास्तव्यश्रेष्ठिवर्यसाधुवीसलसुतचं-

पकाभ्यर्थनया सूरिपदे प्रतिष्ठापिता इति श्रीसोमसौभाग्यकाव्ये पंडितप्रतिष्ठासोमैरुक्तमस्ति तथाहि—

"श्रीसोमसुन्दरगुरून्, व्यजिज्ञपच्चम्पकोऽन्यदा साम्रः ।"

"विम्रस्य निर्विलम्बं, कुरु प्रतिष्ठां विभो! शिष्टाम् ॥"

निरुत्सुकेन चेतसा वाञ्छन्ति । न हि कथमपि तेऽसारसंसारजन्यसुखप्राप्त्यर्थमनेकानर्थमर्थं गृह्णन्त्युपकृत्य जीवलोकमतो व्यक्तमेव तेषां स्वपरकार्यसाधनपरत्वम् । किं बहुना ? उद्दिधीर्षन्ति महीमण्डलं विविधभंगकैर्वाङ्मनःकायजन्यैर्विश्वजनीनैर्व्यापारविशेषैस्तथा चैतैरेव सूरिपादैः श्रीजिनशासनख्यातमहिम्नो धन्यनाम्नो धनसारव्यवहारिसुतस्य व्यावर्णनपरेण चेतश्चमत्कृतिजनकेनानेन निवन्धेन खलु श्रीजिनप्रणीताविगीतागमनिर्णीतदानधर्मणि दर्शिता कर्तव्यता जगज्जन्तूनामिति ॥

यद्यपि प्रवचने सुपात्राभयानुकम्पौचित्यकीर्तिरूपं पञ्चप्रकारं दानं व्यावर्ण्यते तथापि सद्यो निर्वृतिदायकत्वात् सुपात्रदानस्यैव प्राधान्यमिति समयस्तथा चाहुः परमर्षयः—

"लब्भइ तिलोयलच्छी, लब्भइ सव्वंपि कामियं सुक्खं ।
इक्कंचिय नवि लब्भइ, सुपत्तदाणं जगप्पहाणं ॥"

तद्धि न्यायार्जितानां प्रासुकैषणीयानां कल्पनीयानां चान्नपानखादिमस्वादिमवस्त्रपात्रकम्बलौषधभैषज्यादीनां देशकालश्रद्धासत्कारक्रमपूर्वकं परया भक्त्याऽऽत्मानुग्रहबुद्ध्या यन्निवृत्तसर्वावद्येभ्य उत्तमेभ्यः प्रदानम् ।

ते हि खलु वैधकर्मानुष्ठानश्रद्धावद्धासनारब्धानवद्यभावयज्ञनितांतशांतस्वांतविकचरुचिराम्भोजद्युतिमदमोचनलोचनप्रभावखञ्जीकृताखिलमनोरमणीमणिमञ्जीरमञ्जुतरसिञ्जिताराञ्जितहृद्दोषाकुलसकलमनुजकुलसकलकलुषकषणबद्धपरिकरा निजामृतोपदेशैः करुणारसकल्लोलवरुणालयाः शान्तरसालयाः विद्योद्यानमालिनः प्रचुरगुणशालिनः परया भक्त्या

॥ ॐ अर्हँ ॥

। प्रस्तावना ।

# ॥ दानकल्पद्रुमः ॥



अयं खलु विकरालकलिकालव्यालवदनरदनविपविमूर्च्छितसत्त्वोज्जीवनसुधासारसंकाशानां स्वप्रतिभाप्रकर्षबलप्रत्याख्यातसुरगुरूणाम्परमगुरूणां श्रीमज्जिनकीर्तिसूरीणां ग्रंथग्रथनप्रयासः साधयति स्वपरोपकृतिप्रकृतिं सहजां पुण्यात्मनाम्।

तथाच—साधयता परकीयं कार्यजातमात्मीयमपि साधितमेवाहुर्महानुभावाः पूर्वतनपुरुषाः । सकलधर्मकर्मणः परोपकारस्यैवासाधारणकारणतया गीयमानत्वादिति । इदमेव हि महिमातिशयतृणीकृताम्बुराशीनां समस्तसंगविरतानां निरस्तस्वपराश्रयाश्रयमतीनां भैक्ष्यमात्रभावितात्मसन्तोषाणामचिन्त्यचिन्तामणीनां मुनिसत्तमानां वृत्तेरौचित्यम्। यतस्ते हि भगवन्तस्सकलदुःखितप्राणिप्राणत्राणैकलालसाः परमधर्मानुरक्ता वाङ्मनःकायसंयमवन्तस्सर्वसाधारणमाहारमपि शरीरनिर्वहणायैव गृह्णन्ति, शरीरमपि धर्मसाधनमिति धारयंति, धर्ममपि मुक्तिकारणमिति बहुमन्यन्ते, मुक्तिमपि

"व्योमाग्निवार्द्धिशीतांशुमिते संवत्सरे वरे।"
"प्रमदाप्रमदाद्वैतदायिनं सुषुवे सुतम् ॥"

---

"अद्रीश्वराद्ग्यम्बुधिचन्द्रसम्मिते, भूते प्रमोदप्रकरेण वत्सरे।"
"समं भगिन्या गिरिदेवताद्युता, सोमेन दीक्षा जगृहे महामहैः ॥"

---

"श्रीवाचकोत्तमपदं खशराब्धिचन्द्रसंवत्सरे विगतमत्सरचित्तवृत्तेः।"
"अब्दैः समस्य समभून्नखसम्मिताब्दैः शाब्देन सन्मधुरिमाऽतिशेयन तस्य ॥"

---

"वर्षे कुलाचलशिलीमुखवारिराशि–पीयूषदीधितिमितेऽप्रमिते प्रमोदैः।"
"श्रीसोमसुन्दरगुणोज्ज्वलवाचकाना–माचार्यवर्यपदमद्भुतकारि जज्ञे ॥"

---

"वर्षे नन्दनिधानवारिधिहिमज्योतिर्मिते स्वर्ययुः।" इत्यलम् ॥
अस्य ग्रन्थस्य शोधनसमये पुस्तकत्रयमुपलब्धमासीदेकन्तावदारब्धाचामाम्लमहातपःशोषितविग्रहाध्यात्मभाव-

श्रीमद्विवेकविजयानां सकाशादासादितं शुद्धप्रायम् । द्वितीयञ्च
भावितात्मनां विवेकच्छेकमतीनामस्मद्वृद्धभ्रातॄणां श्रीमद्विवेकविजयानां श्रीमद्हर्षविजयनामाङ्कितचित्कोशसत्कं
मद्रदेशान्तर्गत "जंडियालागुरुका" इत्येतन्नामग्रामतोऽस्मद्दादागुरुश्री १०८ श्रीमद्हर्षविजयनामाङ्कितचित्कोशसत्कं
शुद्धतरम्प्राचीनञ्चोपलब्धम् ।

तृतीयन्तु श्रीमद्विजयानन्दसूरीश्वरापरनामात्मारामसुनीनजन्मस्थानोपवर्ति 'जीरा' नगरान्मुनिवर्यश्रीहीरविजय-
सुमतिविजयाभ्याम्प्रेषितन्तदपि जीर्णं शुद्धञ्च ।

एतत्पुस्तकत्रयाधारेण शोधितेऽप्यस्मिन् ग्रन्थे यदि कदाचित् छाद्मस्थ्यदोषाच्छीशकाक्षरयोजकप्रमादाद्वा कुत्रचिद-
शुद्धिर्जाता स्थिता वा भवेत्तर्हि शोध्या कृपावद्भिर्मनीषिभिः ।

यतः—गच्छतस्स्खलनं लोके, जायते महतामपि । हसन्ति दुर्ज्जनास्तत्र, समादधति सज्जनाः ॥

नवपल्लवनिबद्धस्याऽस्य निबंधस्यायं तावद्विषयक्रमः ।

( १ ) प्रथमपल्लवे-मंगलाचरणदानमहिमावर्णनपुरस्सरं श्रीधन्नकुमारमातापितृनगरजन्मकलाकलापसम्पादनसुवर्ण-
लक्षोपार्जनादिवर्णनम् ।
( २ ) द्वितीये-सुवर्णलक्षद्वयार्जनवर्णनम् ।
( ३ ) तृतीये-षट्षष्ठिद्रव्यानयनवर्णनम् ।
( ४ ) तुर्ये-सुवर्णसिद्धिविदेशप्रस्थानवर्णनम् ।

( ५ ) पञ्चमे-कन्यात्रयपरिणयनवर्णनम् ।
( ६ ) षष्ठे-सौभाग्यमञ्जरीपरिणयनस्वजनसमागमवृत्तम् ।
( ७ ) सप्तमे-कन्याचतुष्टयपरिग्रहराजगृहप्रवेशोदन्तः ।
( ८ ) अष्टमे-बांधवप्रीतिप्रागभववर्णनम् ।
( ९ ) नवमे-चारित्रग्रहणानशनकरणसर्वार्थसिद्धविमानगमनवर्णनम् प्रशस्तिग्रन्थग्रथनसमाप्तिवर्णनञ्चेति ॥

रचितसुप्रबन्धास्समस्तहेयप्रत्यनीकानन्तकल्याणगुणैकताना वि-भवतामखिलपारावारप्रमथनपरिकलितबुधजनानन्दा रचितसुप्रबन्धासमस्त... रचितदिगंतरालपूर्त्या लाव-शिष्टविद्यासम्भारभासुरजननिकराभिवन्द्यमानाश्शरदिन्दुकुन्दघनसारनीहारहारसङ्काशमूर्त्या रचितदिगंतरालपूर्त्या लाव-ण्योपमितसुरालये पञ्चनदालयेऽद्यापि सुधामावमानितसहस्रकरातमोहरामन्दहृदयानन्दसम्फुल्लवदनारविन्दसुरेन्द्रकदम्ब-निटिलतटचुम्बितचरणारविन्दतीर्थकरचारुचैत्यवृन्दमिषेण विराजमानया निर्मानया कीर्त्याऽभितस्सुरभिता जैनाचार्या धियानन्दितविबुधाचार्या न्यायाम्भोनिधिश्रीमद्विजयानन्दसूरि ( आत्मारामजी ) पादास्तीर्थपादास्तत्पदाम्भोरुहाल्लब्ध-प्रसादाः श्रीमल्लक्ष्मीविजयपूज्यपादास्तेभ्य आप्तप्रसादराशिसकलमनुजाज्ञानतमोविनाशिश्रीमद्हर्षविजयाः शान्त्याकूलो-कजयास्तच्चारुपदाम्भोजसेवालब्धप्रतापजनसंतापहारकतारकमुनिवरा मनुजसंहतिहृदयपद्माकरदिनकराः कृतकामादिषड्-वैरिजयाः पूज्यपादश्रीमद्वल्लभविजयाः । तच्चरणाम्भोजरजःसेवी मुनि—ललितविजयः

शासननायकश्रीमन्महावीरस्वामिनिर्वाणाद्वसुपशुपतिनेत्रवेदकरमितेऽब्दे श्रीमदात्मसंवत्सरे रसेन्दुप्रमितेङ्कद्रव्यनिधीन्दुतमे वैक्रमीयसमे मधुमाससितदलतृतीयायां जीववासरे श्रीमल्लोढनपार्श्वप्रतिष्ठितायां दर्भावत्याम्पुर्यभवदियं समाप्तिः श्रीमद्विजयकमलसूरिराज्ये प्रवर्तमाने, शुभं भूयाच्छ्रीश्रमणसंघस्य



॥ अर्हं ॥

श्रेष्ठि-देवचन्द्र-लालभाई-जैनपुस्तकोद्धारग्रन्थाङ्के—

# श्रीमज्जिनकीर्त्तिसूरीश्वरनिर्मितदानकल्पद्रुमः

ॐ नमो वीतरागाय

स श्रेयस्त्रिजगद्ध्येयः, श्रीनाभेयस्तनोतु वः । यदुपज्ञं जयत्येषा, धर्मकर्मव्यवस्थितिः ॥ १ ॥

सर्वज्ञोपक्रमं धर्मः, परमं मङ्गलं भवेत् । असौ चतुर्धा तत्रापि, पूर्वं दानं प्रशस्यते ॥ २ ॥

विभवो वैभवं भोगा, महिमाथ महोदयः । दानपुण्यस्य कल्पद्रोरनल्पोऽयं फलोदयः ॥ ३ ॥

दत्ते लक्ष्मीनिदानं यो, दानमानन्दतः कृती । स धन्य इव धन्यात्मा, सम्पदां जायते पदम् ॥ ४ ॥

दानं दत्त्वापि ये सत्त्वा, निःसत्त्वा अनुशेरते । परत्र दुःखिनस्ते स्युर्यथा धन्याग्रजास्त्रयः ॥ ५ ॥

नक०

१ ॥

तथाहि—अस्ति स्वस्तिप्रशस्तिश्रीगरिम्णामेकमास्पदम् । नररत्नप्रतिष्ठानं, श्रीप्रतिष्ठानपत्तनम् ॥ ६ ॥

यत्र गोदावरीखेलन्महेलालङ्कृतिच्युतैः । रत्नैः प्लवागतैर्मन्ये, जज्ञे रत्नाकरोऽम्बुधिः ॥ ७ ॥

भीमकान्तगुणस्तत्र, जितशत्रुरभून्नृपः । भीत्या प्रीत्या च सम्भूयाऽमित्रैर्मित्रैश्च यः श्रितः ॥ ८ ॥

असिर्धाराधरोऽप्यस्य, नवः कोऽपि सपुष्करः । यद्धारायामहो मग्नास्तुङ्गाः क्षोणिभृतोऽपि हि ॥ ९ ॥

मेनिरे गुरवो बालं, कालं सकलशत्रवः । प्रजाव्रजाश्च तं रामं, कामं पौरपुरन्ध्रयः ॥ १० ॥ युग्मम् ॥

यशोगौरेषु पौरेषु, श्रेष्ठी श्रेष्ठीभवन् गुणैः । धनसार इति ख्यातस्तत्र सत्रं श्रियामभूत् ॥ ११ ॥

गुणैर्दानादिकैर्यस्य, वणिक्पुत्रगणैरिव । यशोभिश्च दिशो व्याप्ताः, स्पर्धाबन्धादिवाधिकम् ॥ १२ ॥

स्तोतुं केनापि नापारि, तस्य चित्तस्य चारिमा । यज्जगत्त्रयनाथोऽपि, नित्यस्थित्या जिनोऽधिनोत् ॥१३॥

शमशीलवती तस्याजनि शीलवती प्रिया । लज्जासज्जास्थिमज्जादिवेधिधर्माधिवासना ॥ १४ ॥

यस्याः सौभाग्यशालिन्या, अमालिन्याशयस्थितेः । नोपमायां समायान्ति, स्वःस्त्रियो विक्रियोद्यताः ॥१५॥

तयोस्त्रयो नयोपेताः, सच्चरित्रपवित्रयोः । अङ्गजाः समजायन्त, दारिद्र्यद्रुमसामजाः ॥ १६ ॥

तेष्वाद्यो धनदत्ताख्यो, धनदत्तसुखोऽर्थिनाम् । द्वितीयो धनदेवस्तु, धनदेन समः श्रिया ॥ १७ ॥
तृतीयो धनचन्द्रोऽभूच्चन्द्रोपमगुणावलिः । दानिनो मानिनो भोगशालिनश्च त्रयोऽप्यमी ॥ १८ ॥
धनश्रीर्धनदेवी च, धनचन्द्रेति च श्रुताः । कान्ताः कान्तागुणैरेषां, ज्ञेया नामक्रमादिमाः ॥ १९ ॥
सकलत्रेषु पुत्रेषु, गृहभाराधिरोपणात्, । सदारो धनसारोऽभूत्, धर्मभारोद्धृतौ पटुः ॥ २० ॥
परमेष्ठिनमस्कारजापं पापविमुक्तये । ब्राह्मे मुहूर्त्ते उत्थाय, निर्मायः सोऽन्वहं व्यधात् ॥ २१ ॥
आवश्यकं द्विसन्ध्यं स, त्रिसन्ध्यं च जिनार्चनम् । नित्यं व्यधत्त शुद्धात्मा, सप्तशश्चैत्यवन्दनम् ॥२२॥
सहर्षं प्रतिवर्षं स, तीर्थयात्रामसूत्रयत् । रथयात्रां च सत्पात्राभ्यर्च्चनप्रवणाशयः ॥ २३ ॥
उपदेशं गुरोर्नित्यं, कारुण्यमसृणोऽशृणोत् । सभार्योऽपि व्यधादेवं, श्रेष्ठी धर्मं विशुद्धधीः ॥ २४ ॥
अथो मिथोऽनुरागेणानयोर्भुञ्जानयोः सुखम् । गृहदासीकृताशेषसंपदासीत्पुनः सुतः ॥ २५ ॥
बालस्य नाभिनालस्य, स्थापने वनिताऽवनिम् । चखान यत्र सौवर्णनिधानं तत्र निर्ययौ ॥ २६ ॥
जातमात्रोऽपि यदसौ, धनं लब्धा निधानगम् । सुतस्य तस्य नामातः, पिता धन्य इति व्यधात् ॥२७॥

धात्रीभिः प्रेमपात्रीभिर्लाल्यमानोऽथ पञ्चभिः । सौभाग्येनेव वपुषा, स्पर्धमानो मुदेऽभवत् ॥ २८ ॥
अथाष्टवर्षदेशीयः, श्वोवसीयसदर्शनः । पितृभ्यां लेखशालायां, मुक्तः प्रौढोत्सवादसौ ॥ २९ ॥
लीलया कलयामास, सकलाः सकलाः कलाः । पूर्वपुण्यानुभावेन, साक्षिमात्रं गुरुः पुनः ॥ ३० ॥
तथाहि—सर्वशास्त्राद्रिपद्यासु, शब्दविद्यासु शिक्षितः । प्रमाणार्णवपारीणः, प्रवीणः कविकर्मणि ॥ ३१ ॥
साहित्ये सत्यसाहित्यः, पुराणेष्वपुराणधीः । ज्योतिषे द्योतितोद्योगश्छन्दःकन्दलनीरदः ॥ ३२ ॥
प्रश्नोत्तरविवादेषु, सद्योऽर्पितसदुत्तरः । प्रहेलिकाब्जिनीहेलिरलङ्कारेषु केलिकृत् ॥ ३३ ॥
समस्यासु सदभ्यासान्नमस्यार्हस्तदर्थिनाम् । नानाभेदाऽऽलिपीनानां, लिपीनां वाचने पटुः ॥ ३४ ॥
सङ्ख्यावेदिषु सङ्ख्यावान्, पटुप्रज्ञो निघण्टुषु । वैद्यके प्राप्तवैशद्यः, सर्वयोगप्रयोगवित् ॥ ३५ ॥
जल्पकेलिष्वनल्पश्रीर्गूढश्लोकेऽप्यमूढहृत् । नाटकग्रन्थनिकषघृष्टकोशलहाटकः ॥ ३६ ॥
अन्तर्धानादिविद्यायां, सावधानमनाः सना । औषधीरसमण्यादिकल्पतल्पविलासिधीः ॥ ३७ ॥
स मन्त्रतन्त्रयन्त्रादिवेदिता खेदिताशुभः । चूडामणिनिमित्तज्ञश्रेणिचूडामणिप्रभः ॥ ३८ ॥

इन्द्रजालकलोत्तालशकुनज्ञानकोविदः । अखर्वगर्वो गान्धर्वे, सङ्गीते गीतगौरवः ॥ ३९ ॥
अविगीतेन गीतेन, गीतेन हृतचेतसाम् । करिणां हरिणानाञ्च, वनान्नेता जनाकुले ॥ ४० ॥
गजाश्वस्य परीक्षासु, शिक्षासु च विचक्षणः । प्रतिमल्लश्च मल्लानां, प्रबुद्धो युद्धयुक्तिषु ॥ ४१ ॥
चक्रव्यूहादिमर्मज्ञो, नर्मनिर्मन्थसोद्यमः । इष्वासविहिताभ्यासः, खड्गोत्क्षेपकृतश्रमः ॥ ४२ ॥
गान्धिकेऽधिकनैपुण्यः, सौगन्धिकधुरन्धरः । अदूष्यो दूष्यवाणिज्ये, माणिक्यज्ञैः प्रमाणितः ॥ ४३ ॥
वर्णितः स्वर्णवाणिज्ये, मणिकारप्रकारवित् । सोत्साहः सार्थवाहत्वे, सांयात्रिकशिरोमणिः ॥ ४४ ॥
हेवाकी राजसेवायां, धुर्यो देवादिभक्तिषु । अमात्रं मन्त्रिणामग्र्यो, वियोगेष्वभियोगवान् ॥ ४५ ॥
चतुर्बुद्धिविशुद्धात्मा, विनीतः सर्वनीतिषु । किं बहूक्तेन ? जज्ञेऽसौ, सर्वविज्ञानपारगः ॥ ४६ ॥
॥ षोडशभिः कुलकम् ॥
सकलानां कलानां स, महसां यशसामपि । गुणानां धिषणानाञ्च, प्रियमेलकतां ययौ ॥ ४७ ॥
गुणैर्बाल्यमतिक्रान्तः, स संक्रान्तः सतां हृदि । तरुणीहरिणीक्रीडावनं यौवनमासदत् ॥ ४८ ॥

जनुर्महेभ्य आरभ्य, महेभ्यस्य गृहेऽभ्यगात् । वृद्धिं श्रीर्धनसारस्य, धन्यभाग्यानुभावतः ॥ ४९ ॥
जनको जनकोटीनां, पुरो धन्यस्य वर्णनम् । चकार निर्विकारात्मा, निषिद्धमपि नीतिषु ॥ ५० ॥
यदुक्तं—प्रत्यक्षे गुरवः स्तुत्याः, परोक्षे मित्रबान्धवाः । कर्मान्ते दासभृत्याश्च, पुत्रा नैव मृताः स्त्रियः ॥५१॥
यतःप्रभृत्यसौ जातः, पुत्रोऽस्माकं तदादि भोः । मन्त्राकृष्टेव सम्प्राप्ता, गृहे श्रीः सर्वतोमुखी ॥ ५२ ॥
पौराणां गुणगौराणां, चित्तचौरा गुणा अमी । सङ्ख्यावतापि सङ्ख्यातुं, शक्यन्ते नास्य केनचित् ॥५३॥
भाग्याकृष्टेन केनापि, मद्गृहे जगृहे किल । धुनानेनामुना दौःस्थ्यमवतारः सुरद्रुणा ॥ ५४ ॥
सैवं यथा यथा धन्यं, प्रशशंस तथा तथा । बोभूयामासिवांसस्ते, सासूया अपरे सुताः ॥ ५५ ॥
प्रकोपवह्नावह्नाय, स्नेहबाहुल्यमाहुतिम् । विधाय बाहुमुत्तम्भ्य, प्राहुस्ते गर्विता इति ॥ ५६ ॥
नानापण्यैकपात्रेण, यानपात्रेण सागरम् । अवगाहामहे ग्राहा, इवोद्ग्राहाय सम्पदाम् ॥ ५७ ॥
पर्यटामः परदेशान्, क्लेशान् सासहयः स्वयम् । उल्लङ्घ्य द्रविणापूर्णशकटा विकटाटवीः ॥ ५८ ॥
ग्रीष्मार्कतापितक्षेत्रक्षेत्रारम्भान् प्रतन्महे । अरघट्टांश्च दारिद्र्यकणपिष्टिघरट्टकान् ॥ ५९ ॥

कुर्मो विपणिवाणिज्यं, वाणिजप्राणितं सदा । दद्मः सामन्तभूपेभ्यः, कुसीदेन धनं बहु ॥ ६० ॥

चतुरं चतुरङ्गायां, सभायां व्यक्तयुक्तिभिः, । ह्नुवानमपि जित्वाऽन्यं, जीर्णं स्वीकुर्महे ऋणम् ॥ ६१ ॥

दुर्जनग्राहदुर्गाहां, पारवश्योर्मिवर्मिताम् । भेजामो राजसेवां च, रेवामिव मतङ्गजाः ॥ ६२ ॥

एवमर्थार्जनोपायान्, विधाय विविधान्वयम् । आनयामः श्रियां कोटिः, कोटीरा व्यवसायिनाम् ॥६३॥

॥ सप्तभिरर्थतः कुलकम् ॥

व्रीडाविनाकृतोऽद्यापि, क्रीडां जातु न मुञ्चति । धन्योऽसौ नीतिमाणिक्यं, चाणिक्यं भाणितोऽपि हि ६४

दूरे वाणिज्यकर्माणि, गेहकर्माण्यसौ सुखी । कर्तुमद्यापि जानाति, नातिखेलनलालसः ॥ ६५ ॥

तथापि सा पितः ! कापि, मूढतानुत्तरा तव । यदेष श्लाघ्यते नित्यं, वयं निन्द्यामहे पुनः ॥ ६६ ॥

सदसद्व्यक्तिमाधातुं, नेष्टे बह्वन्तरेऽपि यः । स हास्यः कस्य नैकस्य, यतो लोकेऽपि गीयते ॥ ६७ ॥

काके कार्ष्ण्यमलौकिकं धवलिमा हंसे निसर्गस्थितिर्गाम्भीर्ये महदन्तरं वचसि यो भेदः स किं कथ्यते ।

एतावत्सु विशेषणेष्वपि सखे ! यत्रेदमालोक्यते, के काकाः ? खलु के च हंसशिशवो ? देशाय तस्मै नमः ६८

त्वयैवारोपिताः प्रौढिं, किं सम्प्रति विगोपिताः । वयं पुरो महेभ्यानां, धन्यस्यैव गुणस्तवात् ॥ ६९ ॥

धन्यमेव गुरूकुर्वन्नस्मान् लघयसि ध्रुवम् । लघ्वेकं स्यात्तुलाचेलं, चेद् गुरूक्रियतेऽपरम् ॥ ७० ॥

अपत्येषु च वात्सल्यं, तात! तुल्यं तवोचितम् । सर्वेषु तटवृक्षेषु, सरसः सलिलं यथा ॥ ७१ ॥

सम एव गुणाधाने, पिता तनुभुवा भवेत् । महाव्रतानां सर्वेषां, रेखाप्राप्तो यथा व्रती ॥ ७२ ॥

किंच शास्त्रे निषिद्धासौ, तात! पुत्रगुणस्तुतिः । निषिद्धस्याहतिः कस्य, वद सौख्याय जायते? ॥७३॥

पित्रोच्छृङ्खलितः पुत्रः, कुटुम्बक्षयकृद्भवेत् । काष्ठेनोच्छ्वासितः सर्व, काष्ठजोऽग्निर्न किं दहेत्? ॥ ७४॥

धन्ये काधिकता द्रष्टा!, न्यूनतास्मासु का पुनः? । सदैव दैवतस्येव, स्तूयन्तेऽस्यैव यद्गुणाः ॥ ७५ ॥

इष्यते वर्धमाना चेत्, मिथः स्नेहलतालता । धन्यश्लाघाग्निरुज्ज्वाल्यस्तात! नातः परं तदा ॥ ७६ ॥

सोऽपि तान् कुपितान् प्राह, पिता यूयं जलाशयाः । वत्सा! मत्सामकतकैः, स्वच्छा भवत सम्प्रति॥७७॥

पुत्राः कुत्रापि किं द्रष्टा, सदसद्व्यक्तिमूढता । विशुद्धोभयपक्षस्य, हंसस्येव शुचेर्मम? ॥ ७८ ॥

आभूपगोपं मे ख्याता, सुसमीक्षितकारिता । स्तूयन्तेऽतः परीक्ष्यास्य, साक्षात्ततो मया गुणाः ॥ ७९ ॥

गुणाढ्येऽपि जने मौनं, चेत्तदा निष्फला गिरः । कुर्वेऽस्य गुणिनः सूनोर्निषिद्धामप्यतः स्तुतिम् ॥८०॥

प्राक् तथा नाभवल्लक्ष्मीर्जाते धन्ये यथास्ति नः । तदेष एव श्रीहेतुरन्वयव्यतिरेकतः ॥ ८१ ॥

चन्द्रादेवाम्भोधिवेला, मधोरेव वनश्रियः । सूर्यादेवाम्बुजोल्लासो, बीजादेवाङ्कुरोद्गमः ॥ ८२ ॥

सुभिक्षं जलदादेव, धर्मादेव जयो नृणाम्। निर्णीतमेतज्जानीत, धन्यादेव श्रियो हि नः ॥८३॥ युग्मम् ॥

तद् भाग्यं तच्च सौभाग्यं, सा च बुध्धेर्विशुद्धता । कुत्राप्यन्यत्र तं पुत्रं, व्यतिवृत्य न वर्तते ॥ ८४ ॥

न चेद्वः प्रत्ययो वत्सा !, मदर्पितधनैस्तदा । स्वयं प्रणीतवाणिज्याः, स्वस्य भाग्यानि पश्यत ॥ ८५ ॥

उद्यमे वः समेऽप्याया, भाविनो भाग्यमात्रया । तुल्येऽपि वायौ यद्वीच्यः, सरस्सु जलमानतः ॥ ८६ ॥

इति ते श्रेष्ठिनादिष्टा, दिष्ट्या स्राक् प्रतिपेदिरे । इष्टं वैद्योपदिष्टं चारोग्यार्थिन इवौषधम् ॥ ८७ ॥

त्रिंशतं त्रिंशतं स्वर्णमाषानेषामथाऽर्पयत् । चतुर्णामपि पुत्राणां, व्यवसायकृते पिता ॥ ८८ ॥

भवद्भिर्भोजनं देयं, पर्यायेण दिनेष्वपि । धनैर्निजार्जितैरेव, कुटुम्बस्येत्यवक् स तान् ॥ ८९ ॥

अथ मूलधनं लात्वा, प्रथमः प्रथमेऽहनि । गत्वा चतुष्पथं सूनुर्व्यवसायमसूत्रयत् ॥ ९० ॥

महत्युपक्रमेऽप्यस्य, लाभोऽभूत्स्वल्प एव यत् । कर्माणि प्राणिना दद्युः, फलं नोपक्रमाः पुनः ॥ ९१ ॥
बुभुक्षाभजने मल्लान्, वल्लांस्तल्लाभजैर्धनैः । तैलादि च समानीय, स कुटुम्बसभोजयत् ॥ ९२ ॥
अद्वितीयोद्यमावेवं, द्वितीयकतृतीयकौ । तज्जातीयां ददाते स्वैर्भुक्तिं स्वस्वदिनेऽर्जितैः ॥ ९३ ॥
न्ययुङ्क्त भुक्तिदानेऽथ, चतुर्थेऽह्नि चतुर्थकम् । जनको धनकोटीनामर्जने सज्जमात्मजम् ॥ ९४ ॥
गृहीत्वा त्रिंशतं स्वर्णमाषानाषाढमेघवत् । सोऽगाच्चतुष्पथाम्भोधिं, धनं जीवनमर्जितुम् ॥ ९५ ॥
महेश्वरमहेभ्यस्य, तत्रायं शकुनैः शुभैः । हट्टे भाग्यवशायाय, व्यवसायाय जग्मिवान् ॥ ९६ ॥
महेश्वरस्तदा मित्रलेखं प्रेष्यकरागतम् । गोप्याभिधेयमुन्मुद्य, मौनेनैवमवाचयत् ॥ ९७ ॥
स्वस्तिलक्ष्मीप्रतिष्ठाने, श्रीप्रतिष्ठानपत्तने । मित्रं महेश्वरं सार्थस्थानान् मित्राभिधो वणिक् ॥ ९८ ॥
आलापयति सस्नेहं, यथा स्वस्तिप्रथास्ति मे । लेखः प्रेष्यास्त्वया श्रेयोमयाः कार्यमथोच्यते ॥ ९९ ॥
औत्तराहः सार्थवाहः, पयोवाह इवोन्नतः । अगण्यपण्यपुण्यार्णःपूर्णस्तत्रैति पुर्यसौ ॥ १०० ॥
दत्तदौःस्थ्यप्रयाणानि, क्रयाणान्यत्र बान्धव ! । महेभ्यार्हाणि सर्वाणि, सार्थे सन्तीति निश्चिनु ॥१०१॥

किं चासौ स्वल्पलाभेऽपि, सार्थेशः स्वक्रयाणकम्। हेतोः कुतोऽपि विक्रीय, स्वस्थानं गन्तुमुत्सुकः ॥१०२॥
तन्मित्र! शीघ्रमागम्यमस्य सार्थस्य सम्मुखम्। क्रयाणसट्टकं कार्यं, लाभस्ते भविता महान् ॥ १०३ ॥
एवंविधाभिधेयांश्च, लेखान् प्राहिणवं बहून्। त्वं नैकमपि तं प्राप, पापः स्वर्णनिधिं यथा ॥ १०४ ॥
वाचयित्वेति लेखार्थमवधार्याप्यनार्यवत्। प्रभातेऽपि क्षुधार्तोऽसौ, चेतस्येवमचिन्तयत् ॥ १०५ ॥
दुष्प्रापागण्यपण्याढ्यः, सार्थ आसन्न आगतः। परमद्यापि जानाति, नातिव्यग्रोऽपरो वणिक् ॥ १०६ ॥
तावत्क्षुधार्दितो भुक्त्वा, भवामि स्वस्थमानसः। धियः स्वस्थे यतश्चित्ते, धीसाध्यं च क्रयादिकम् ॥१०७॥
पश्चाद्द्रुततरं गत्वा, सार्थनाथस्य सम्मुखम्। एकाक्येव ग्रहीष्यामि, क्रयाणान्यखिलान्यपि ॥ १०८ ॥
क्रीतैः क्रयाणकैरेतैर्लाभो भूयान् भविष्यति। अनास्तिरस्ति सर्वेषामेषामत्र पुरे यतः ॥ १०९ ॥
महेश्वरो विचिन्त्येति, भोजनाय गृहं गतः। अपवाद इवोत्सर्गं, यत्सर्वं बाधते क्षुधा ॥ ११० ॥
पृष्ठे स्वच्छस्य भूर्जस्य, वर्णालिं प्रतिबिम्बिताम्। धन्योऽपि गोपिताकारो, वाचयित्वेत्यचिन्तयत् ॥१११॥
अहो रहो वयस्येन, ज्ञापितोऽप्येष लेखतः। मूढः प्राग् भुक्तये प्राप्तो, नैव वाणिज्ययुक्तये ॥ ११२ ॥

भुङ्क्ते यावदसौ तावद्, कुर्वे तत्पण्यमात्मसात् । गत्वा सार्थस्य मध्येऽहं, श्रीणां बीजं यदुद्यमः ॥११३॥
ध्यात्वेति कृतशृङ्गारश्चतुरः स तुरङ्गमम् । आरुह्य प्राचलत्सार्थाभिमुखं मित्रसंयुतः ॥ ११४ ॥
सार्थसार्थस्य सार्थस्याधिनाथस्यामिलत्पथि । बहुप्रायां भुवं गत्वा, यामार्धे प्रथमेऽथ सः ॥ ११५ ॥
विधाय कुशलालापं, धन्यः पप्रच्छ सार्थपम् । भाण्डस्वरूपसंख्यादि, सोऽप्याह च यथास्थितम् ॥११६॥
श्रेष्ठिसूर्हस्तसंज्ञाभिः, स्वमित्रैः सार्थिकैरपि । विहिताभिः कृते मूल्यमेले शैलेशनिश्चले ॥ ११७ ॥
सर्वं दृष्ट्याहतीकृत्य, पण्यं चक्रे तदात्मसात्। सत्यङ्कारपदे चादात्, स्वकीयां मणिमुद्रिकाम् ११८ युग्मम्
भुक्त्वा ततोत्सुकस्तावन्, महेभ्यः स महेश्वरः । परेऽपि नैगमाः सार्थागमं ज्ञात्वा तथाऽऽगमन् ॥११९॥
प्रागल्भीभूय संभूय, भूयःपण्यार्थवादिभिः । अयाचि वाचिधीरस्तैः, सार्थनाथः क्रयाणकम् ॥ १२० ॥
स प्राह सार्थवाहस्तान्, भद्रा भद्राणि सन्तु वः । किं कुर्वे पूर्वमेवैतद्धन्यस्यास्य मयार्पितम् ॥ १२१ ॥
सत्यङ्कारोऽपि चाग्राहि, समग्राहितनिर्णयः । एवमप्यन्यथा कुर्वे, चेदकीर्त्तिस्तदा भवेत् ॥ १२२ ॥
तेऽथाधन्यंमन्यतमा, धन्यमभ्यागता जगुः । भाण्डमर्पय लाभस्य, हेमलक्षं गृहाण च ॥ १२३ ॥

परोपकारधौरेय !, त्वत्प्रसादेन सम्प्रति । भवामो वणिजः सर्वे, पण्यैः पूर्णमनोरथाः ॥ १२४ ॥

गृहीत्वा स्वर्णलक्षं स, स्थूललक्षशिरोमणिः । तेभ्यः समर्प्य पण्यानि, धन्यः स्वगृहमागमत् ॥ १२५ ॥

अथ हेमसहस्रेण, भोज्यवस्तून्यमेलयत् । सूपकारैकसारश्च, सूपकारैरकेलयत् ॥ १२६ ॥

ततो निमन्त्रयामास, स्वजनान् भोजनाय सः । तेऽप्यायाता यथास्थानं, सर्वे भोक्तुमुपाविशन् ॥१२७॥

स्थालिकासूपनीतासु, बालिकाः पर्यवेषयन् । प्राक् फलावलिकास्तृप्तिमालत्याः कलिका इव ॥ १२८ ॥

सुखास्वाद्यानि खाद्यानि, मोदकाँश्चित्तमोदकान् । घृताचितास्तथा स्वर्गचिताः स्वर्गादिव च्युताः ॥१२९॥

घृतपूरान् वपूरागहेतून् केतूनिव क्षुधाम् । रसश्रीमण्डकान् खण्डखचितानपि मण्डकान् ॥ १३० ॥

सौरभ्यशालिनः शालीन्, कलमानलमायतान् । रोचकस्य समुद्राँश्च, मुद्रान्मुद्राविव श्रियाः ॥ १३१ ॥

ज्यायःपरिमलप्राज्यान्याज्यानि व्यञ्जनाधिकम् । संरम्भानिव हासस्य, करम्भान् भुक्तिसुभ्रुवः ॥ १३२ ॥

हृष्टाः सर्वे मध्यवेश्माऽजिरे बुभुजिरे च ते। ततोऽनुकूलैस्ताम्बूलैर्मुखशोभाश्च भेजिरे ॥१३३॥ षड्भिः कुलकम्

शेषद्रव्यव्ययाद्भ्रातृजायानां स व्यधापयत् । सारा हारार्धहाराद्याः, कृती रत्नाद्यलङ्कृतीः ॥ १३४ ॥

पुण्यैरस्मत्कृतैरेव, कुलेऽत्र त्वमवातरः ॥ १३५ ॥
भ्रातृजायाः समुदिता, मुदिता देवरं जगुः । अहो वाणिज्यकौशलम् ॥ १३६ ॥
अहो सौभाग्यभङ्गी ते, कटरे भाग्यमद्भुतम् । अवन्ध्यबीजं लक्ष्मीणामहो वाणिज्यकौशलम् ॥ १३६ ॥
चिरं जीव चिरं नन्द, देवर त्वं चिरं जय । रञ्जय स्वजनान् वंशं, सच्चरित्रैः पवित्रय ॥ १३७ ॥
स्वकान्ताभिः कृतामेवं, धन्याद्भुतगुणस्तुतिम् । बन्धवो धनदत्ताद्या, निशम्येर्ष्यालवोऽभवन् ॥ १३८ ॥
पिता हितावहा वाणीरभाणीत्तान् सुतान् प्रति । न तत्साधूचितं वत्साः, मत्सरित्वं गुणेषु यत् ॥१३९॥
उक्तं च–वरं प्रज्वलिते वह्नावह्नाय निहितं वपुः । न पुनर्गुणसंपन्ने, कृतः स्वल्पोऽपि मत्सरः ॥ १४० ॥
दन्दह्यमाना निष्पुण्याः, पुण्याढ्यस्य महोऽग्निना । अशक्तास्तत्पदं गन्तुं, विभाषन्ते पदे पदे ॥ १४१ ॥
आसतां गुणिनस्तावद्, भूषिताशेषभूतलाः । येषां गुणानुरागोऽस्ति, तेऽपि पूज्या जगत्त्रये ॥ १४२ ॥
गुणद्वेषादपूज्यः स्यात्, पूज्यश्च गुणरागतः । निदर्शनं भवत्यत्र, पार्श्वस्थमुनियासलम् ॥ १४३ ॥
तथाहि–प्रागकोपिमनाः कोऽपि, गोपितेन्द्रियचापलः । तपःकृशो भृशोद्भूतभवभीतिरभून्मुनिः ॥ १४४ ॥
चरन् गोचरचर्यायां, स ईर्यासमितोऽन्यदा । अच्छद्मसानसः सद्म, गतः कस्या अपि स्त्रियाः ॥ १४५ ॥

स्थितो भिक्षूचिते देशे, महर्षिर्धर्षितारातिः । धर्मलाभं जगत्कल्पद्रुमाभं वितरन् गिरा ॥ १४६ ॥
आययौ साथ युवती, हर्म्याद्धर्म्यस्पृहावती । निर्मायधीर्बहिर्भैक्षं, करे निर्माय यावता ॥ १४७ ॥
मुनिरेतदलात्वैव, तावता स गतोऽन्यतः । हतश्रद्धाथ सा श्राद्धा, स्वमभाग्यं निनिन्द च ॥ १४८ ॥
तदैव दैवयोगेन, तत्रागाद्गुणरागवान् । वेषमात्रधरः साधुर्भैक्षं कक्ष्यकरोच्च तत् ॥ १४९ ॥
अथो मिथोविशेषं सा, तयोर्दृष्ट्वाब्रवीदृजुः । पृच्छामिच्छामि निर्मातुं, न क्रुषे यदि रुष्यासि ॥ १५० ॥
वाणीमभाणीत्कल्याणीमेष वेषधरो मुनिः । पृच्छ स्वच्छमते! रोषदोषशोषकरोऽस्मि यत् ॥ १५१ ॥
साभ्यधात्त्वत्समः साधुर्भिक्षां नैतां ममाग्रहीत् । त्वमग्रहीश्च वैषम्ये, युवयोः किं हि कारणम्? ॥१५२॥
स प्राह शृणु कल्याणि!, प्राणिरक्षापरायणाः । मुनयस्ते महात्मानः, सन्नवब्रह्मगुप्तयः ॥ १५३ ॥
रुक्षं भैक्षं च तेऽश्नन्ति, तुच्छमुञ्छसमागतम् । यात्रामात्रार्थमेतस्य, धर्मगात्रस्य निर्ममाः ॥ १५४ ॥
नीचद्वारेऽन्धकारेण, गहने सदने तव । अचक्षुर्विषये भिक्षां, न गृह्णन्ति कृपालवः ॥ १५५ ॥
त्वया कुतो गृहीतेति, गृहस्थे! यदि पृच्छसि? । वेषमात्रोपजीवित्वाद्, भद्रेऽहं श्रमणब्रुवः ॥ १५६ ॥

सोग्रधैर्यः क्व कल्याणि! प्राणितेऽपि गतस्पृहः । हीनसत्त्वः पुनः काहं, देहलालनलालसः ॥ १५७ ॥

क्व सृगालः क्व पारीन्द्रबालः फालहतद्विपः । खद्योतपोतः कोद्योतः चण्डप्रद्योतनः क्व च? ॥ १५८ ॥

तात्त्विकः स मुनिः सर्वगुणरत्नविभूषितः । नाममात्रधरोऽहं तु, भद्रे ! चञ्चापुमानिव ॥ १५९ ॥

एवमुक्त्वागते तत्र साधौ, सा धौतसंशया । व्यचिन्तयदहो धन्यौ, द्वावपीमौ यदुच्यते ॥ १६० ॥

नागुणी गुणिनं वेत्ति, गुणी गुणिषु मत्सरी । गुणी च गुणरागी च, विरलः सरलो जनः ॥ १६१ ॥

गुणिनोऽपि निरीक्ष्यन्ते, केऽपि केऽपि नराः क्वचित् । गुणानुरागिणः किंतु, दुर्लभास्त्रिजगत्यपि ॥१६२॥

स्वस्तुतेः परनिन्दायाः, कर्ता लोकः पदे पदे । परस्तुतेः स्वनिन्दाया, कर्त्ता कोऽपि न विद्यते ॥ १६३ ॥

इतश्च–विगोपितव्रतः कोऽपि, पार्श्वस्थः श्रमणोऽपरः । तत्रागाद्गुणिषु स्फूर्जद्द्वेषो वेषोपजीवकः ॥ १६४ ॥

अन्नपानीयमानीय, प्रत्यलाभि तया ततः । तथैव पृष्टो धृष्टोऽसावब्रवीच्छ्रमणब्रुवः ॥ १६५ ॥

मायाकार इवाचारैः, प्रथमो जनरञ्जनः । पटुचाटुपरो भद्रे!, वनीपक इवापरः ॥ १६६ ॥

अहं त्वहंकृतित्यागी, दम्भसंरम्भवर्जितः । यथालब्धान्नपानादि, ग्रहीता न कदाग्रही ॥ १६७ ॥

प्राग् मयापीदृशी माया, जनरञ्जनकारिणी । बहुशो बहुशोभार्थं, भुक्ता मुक्ता च सम्प्रति ॥ १६८ ॥
एवमुक्त्वा गते तस्मिन्नीर्ष्यासङ्गिनि लिङ्गिनि । इति दध्यौ स्फुरत्कोपाटोपा सोपासिका हृदि ॥ १६९ ॥
नैर्गुण्यमेकमेतस्य, भुवनेऽपि न माति यत् । अनुत्सार्य च मात्सर्यं, काञ्जिकं कुथितं च तत् ॥ १७० ॥
गुणिनामग्रणीराद्यो, द्वितीयो गुणरागिणाम् । लोके पूज्यतमावेतावुभावपि शुभाशयौ ॥ १७१ ॥
दोषव्यापी च पापीयाँस्तृतीयो गुणमत्सरी । अद्रष्टव्यमुखो नूनं, न पूजादिकमर्हति ॥ १७२ ॥

॥ चतुर्भिः कलापकम् ॥

गुणरागी गुणीवाथ, निर्गुणोऽपि तया व्रती । यथावत्पूजितो नित्यं, दूरादौज्झि च मत्सरी ॥ १७३ ॥
वत्सास्तत्साधुवादेच्छास्खलतां तद्वदन्वहम् । उत्सार्य गुणमात्सर्यं, भजध्वं गुणरागिताम् ॥ १७४ ॥

एतामुदाहरणचारुगुणानुरागसंबोधनीं मधुमुचं धनसारवाचम् ।
आकर्ण्य निर्वृजिनकीर्तितधन्यभाग्यास्त्रिभ्रातृवर्जमदधुः स्वजनाः प्रमोदम् ॥१७५॥ ( वसन्ततिलका )

इतिश्रीतपागच्छनायकश्रीपरमगुरुश्रीसोमसुन्दरसूरिविनये श्रीजिनकीर्तिसूरिप्रणीते श्रीदानकल्पद्रुमे भक्तदानाख्यप्रथमशाखायां धन्यकथाशालिन्यां स्वर्णलक्षोपार्जनो नाम प्रथमः पल्लवः ॥ १ ॥

---

## अथ द्वितीयः पल्लवः

अथोचुः पितरं पुत्राः, सुत्रामाणं वचस्विनाम्। स्थितिं न मत्सरस्तात!, चित्ते धत्ते कदापि नः ॥ १ ॥

किंतु क्षमेमहे नैव, दैवतस्यापि शंसनम्। केनापि विहितं मिथ्या, का कथान्यस्य देहिनः ॥ २ ॥

वाचयित्वा छलाल्लेखमेष लक्षामुपार्जयत्। काकतालीयमेवैतन्न पुनः सार्वकालिकम् ॥ ३ ॥

इत्यादिवादिनां तेषां, प्रतीत्यर्थं पुनः पिता। चतुःषष्टिं चतुःषष्टिं, ददौ कल्याणमाषकान् ॥ ४ ॥

चतुष्पथमथ प्राप्ता, अमी लक्ष्मीसमीहया। स्वस्वकर्मोचिता लाभहानीरानीय चागताः ॥ ५ ॥

निजकीर्तिपिकीध्वानस्फूर्तीनामाधिकीचिकीः। वाणिज्याम्रलतां धन्यः, प्रारेभे सेवितुं कृती ॥ ६ ॥

कर्पूरस्वर्णमाणिक्यवाणिज्यापणवीथिषु। व्रजन्नशकुनव्रातैः, स निषिद्धो न्यवर्तत ॥ ७ ॥

असौ सुशकुनैर्नुन्नो, गतः पशुचतुष्पथम्। तत्रैकं सद्गुणं छेकचक्री च क्रीतवान् हुडम् ॥ ८ ॥

लक्षणैरुरणं लक्ष्मीपूरणं सह नीतवान्। आयाति यावदायातिशयाय स्पृहयन्नयम् ॥ ९ ॥

स्वर्णलक्षं पणीकृत्य, स्थितं क्षितिपतेः सुतम्। तावदग्रे ददर्शैष, युद्धसिद्धहुडान्वितम् ॥१०॥ युग्मम् ॥

लक्षणैः सबलं स्वीयं, वृष्णिं निश्चित्य कृत्यवित् । राजपुत्रहुडेनासौ, पणपूर्वमयोधयत् ॥ ११ ॥
धन्यः पुण्याधिको लक्षं, स्वहुडेन जितेऽग्रहीत् । यतो द्यूते रणे वादे, यतो धर्मस्ततो जयः ॥ १२ ॥
दध्यौ च राजसूश्चेन्मे, हुडोऽयमजडो भवेत् । सदार्जामि तदा लक्षां, लक्षां लक्षपणाद्रणे ॥ १३ ॥
तेन पृष्टोऽवदद्धन्यो, रैलक्षं वक्रयं हुडोः । जिघृक्षौ क्रायके मूल्यं, वणिजो वर्धयन्ति यत् ॥ १४ ॥
जग्रहे सस्पृहेणाथ, लक्षेणापि हुडोऽमुना । अपेक्षतेऽर्थितामर्थो, न क्रयाणकरस्यताम् ॥ १५ ॥
द्विलक्षीलाभतो धन्यो, बलक्षीवो गृहं गतः । वलक्षीभूतसत्कीर्त्तिर्विलक्षीकृतशात्रवः ॥ १६ ॥
तुष्टुवुः स्वजनाः सर्वे, धन्यमेव श्रितोदयम् । य एवोदयते वन्द्यः, स एवात्र प्रगेऽर्कवत् ॥ १७ ॥
श्रुत्वा जनैःकृतां धन्य-प्रशंसामधिकाधिकाम् । त्रयोऽपि बन्धवोऽभूवन्मषिधानसमाननाः ॥ १८ ॥
असूयातापितान् प्राह, हितमेवं पितापि तान् । सौजन्यं संपदां बीजं, पुत्रा! दौर्जन्यमापदाम् ॥१९॥
परं प्रौढं द्विषन्मूढो, जने दौर्जन्यमाप्नुयात् । पूर्णचन्द्रद्रुहं राहुमाहुः क्रूरं न किं बुधाः? ॥ २० ॥
कर्मैककर्तृके विश्वे, विश्वेषां स्यान्न वाञ्छितम् । तदा विशन्ति विद्वांसः, किमसूयास्पृशां दिशाम् ॥ २१ ॥

उक्तं च—मिलिते लोकलक्षेऽपि, येन लभ्यं लभेत सः। शरीरावयवाः सर्वे, भूष्यन्ते चिबुकं विना॥२२॥
विना भाग्यं वरं वस्तु, वृद्धत्वेन न लभ्यते। अब्धिमन्थोत्थरत्नेषु, विषमासीन्महेश्वरे ॥ २३ ॥
विना भाग्यं न सौभाग्यं, शुभान्वयभुवामपि। अमृतादपि संजातः, पङ्कः पादैः प्रमृग्यते ॥ २४ ॥
लोकेऽप्युक्तम्—अपि रत्नाकरान्तःस्थैर्भाग्योन्मानेन लभ्यते। पिबत्यौर्वोऽम्बुधेरम्बु, ब्राह्मीवलयमध्यगम्॥
अत्युन्नतेः सहासूया, स्वविनाशाय जायते। शरभस्याङ्गभङ्गः स्यान्मेघायासूयतो न किम् ? ॥ २६ ॥
दृष्ट्वा श्रुत्वापि योऽन्येषामुत्कर्षं मत्सरी भवेत्। नैव दैवहतः स स्यात्, सुखी पङ्कप्रियो यथा ॥ २७ ॥
तथाहि—अरातिभिरयोध्यायामयोध्यायामभून्नृपः। इक्ष्वाकुवंशजः काकुः, काकुत्स्थ इव नीतिमान् ॥२८॥
पङ्कप्रियाभिधानोऽत्र, कुम्भकारोऽभवत् पुरे। वदान्यजनमूर्धन्यो, लक्ष्मीवान्विनयी नयी ॥ २९ ॥
ईर्ष्योद्रेकात्परं यस्य, गुणः सर्वोऽप्यदूष्यत। क्षारत्वतोऽर्णवस्येव, चन्द्रस्येव कलङ्कतः ॥ ३० ॥
यदि कस्यचिदुत्कर्षः, प्रोच्यते तस्य शृण्वतः। तदेर्ष्ययास्य जायेत, दुर्निवारा शिरोव्यथा ॥ ३१ ॥
गुणान् स्वस्य परेषां वा, स जनान् वीक्ष्य जल्पतः। तान्निषेद्धुमशक्तः स्वं, शिरोऽकुट्टयदीर्ष्यया ॥ ३२॥

निःस्वा अपि प्रशंसन्ति, स्वविवाहादिकोत्सवान् । आत्मोत्कर्षाय मिथ्यापि, द्विगुणत्रिगुणव्ययान् ॥३३॥
स्वोत्कर्षं भाषते सर्वः, संसारीति जगत्स्थितिः । असूयातस्तथाप्येष, न व्यरंसीज्जडाशयः ॥ ३४ ॥
कोपात्कुट्टयतस्तस्य, व्रणश्रेणिः शिरस्यभूत् । विषवल्लेः किमीर्ष्याया, अरुणा पल्लवावलिः ॥ ३५ ॥
युक्त्या प्रज्ञाप्यमानोऽपि, सुताद्यैर्हितकाङ्क्षिभिः । उपारंस्त स नेर्ष्याया, धिग् हठं जडचेतसाम् ॥ ३६ ॥
ततोऽभ्यधुः सुतास्तात!, विजने वन एव वः । साम्प्रतं साम्प्रतं स्थातुं, न यत्रेर्ष्यासमुद्भवः ॥ ३७ ॥
सहर्षः कुम्भकारोऽपि, प्रत्यपद्यत तद्वचः । को ह्युदर्कहितं यद्वा, यद्वदोऽपि न मन्यते ॥ ३८ ॥
तनयैर्मुमुचे क्वापि, कानने विजनेऽथ सः । कुटीरं श्वापदाधृष्यं, विरचय्य सरस्तटे ॥ ३९ ॥
भोजनाच्छादसामग्रीं, पुत्रास्तत्रापि तेनिरे । गदितावप्रतीकारौ, शास्त्रेषु पितरौ यतः ॥ ४० ॥
क्षुधातृषाकुलोऽन्येद्युर्भूपतिः कानने भ्रमन् । मृगयाव्यसनी तत्र, सरस्तीरे समागमत् ॥ ४१ ॥
पानीयं पायितः पङ्कप्रियेण करकास्थितम् । पाटलावासितं स्वादु, स्वच्छं सज्जनचित्तवत् ॥ ४२ ॥
यथोपपन्नमप्यन्नं, भोजितो मुमुदे नृपः । अर्घ्यतेऽवसरे दत्तं, यद्वा तद्वापि भोजनम् ॥ ४३ ॥ युग्मम् ॥

नृपः प्राह किमेकाकी, त्वं वने विजने स्थितः? । गृहिवेषवनेवासौ, द्वयं भद्रं न संगतम् ॥ ४४ ॥
सोऽवक् प्रचेता हे राजन्!, क्लेशो लेशोऽपि जन्तुभिः । स्वदोषैरेव संसारे, प्राप्यते नात्र संशयः ॥४५॥
प्रायो जल्पन्त्यसंबद्धमात्मोत्कर्षपरा नराः । तच्छ्रुत्वा जायतेऽत्यन्तं, ममेर्ष्या दुःखकारिणी ॥ ४६ ॥
तां निरोद्धुमशक्तोऽहं, शिरोऽर्तिमिव दुस्सहाम् । अकुट्टयं स्वमूर्द्धानं, व्रणधोरणिजर्जरम् ॥ ४७ ॥
अस्यां वने ततोऽत्रत्ये, शून्ये नेर्ष्या हि संभवेत् । कारणानामसद्भावे, किं कार्यं जातु जायते? ॥४८॥
निशमय्येति भूपालः, कृपाकूपारमानसः । तदीयदुःखसंक्रान्त्या, विव्यथे दिव्यविक्रमः ॥ ४९ ॥
बहुश्रुताः सतामर्त्तौ, भवन्त्येव समार्तयः । दुष्यताक्ष्णा समं कर्णौ, सहेते पट्टकव्यथाम् ॥ ५० ॥
उपकारं स्मरंस्तस्य, कृतज्ञजनशेखरः । उद्धरिष्यंस्ततः प्राणं, चेतसीति व्यचिन्तयत् ॥ ५१ ॥
उत्तारितं तृणं मूर्ध्नो, येन तस्यापि तन्यते । उपकारः किमेतस्य, पुनः सर्वोपकारिणः ॥ ५२ ॥
स्वर्णदानं धरादानं, कन्यादानं तथैव च । अन्नदानस्य कोट्यंशं, वेलादत्तस्य नार्घति ॥ ५३ ॥
यतः—क्षुधाक्लीबस्य जीवस्य, पञ्च नश्यन्त्यसंशयम् । सुवासनेन्द्रियबलं, धर्मकृत्यं रतिः स्मृतिः ॥ ५४ ॥

कृतभुक्त्युपकाराय, कुम्भकाराय साम्प्रतम् । अनृणीभावमायामि, दत्त्वा लक्ष्मीमनर्गलाम् ॥ ५५ ॥

ध्यात्वेति नृपतिः प्राह, भद्रेहि नगरान्तरम् । मत्समीपस्थितो दिष्ट्या, भुङ्क्ष्व भोगान् मदर्पितान् ५६

कश्चिद्वक्ष्यत्यसंबद्धं, बुधोऽपि तव शृण्वतः । यः पौरश्चौरदण्डेन, दण्डनीयो मया हि सः ॥ ५७ ॥

इतश्च भूपतेः पृष्ठे, सामन्तसचिवादयः । दक्षिणावर्त्तशङ्खस्य, शङ्खा इव समागमन् ॥ ५८ ॥

साकं पङ्कप्रियेणाश्वारूढेन धरणीपतिः । चतुरङ्गचमूयुक्तः, प्रस्थितः स्वपुरं प्रति ॥ ५९ ॥

उपशिल्ये नृपोऽपश्यदेकां रूपवतीं कनीम् । चिन्वतीं कुब्जकुवलीतरुभ्यो बदरावलीः ॥ ६० ॥

नृपः पप्रच्छ सुभ्रु ! त्वं, किंनाम्नी कस्य वा सुता । साह खक्खाभिधानाहं, वाहीकस्यात्मजा विभो ! ॥६१॥

इति पीत्वा कर्णेहत्य, वाचं तस्याः सुधामुचम् । तद्रूपहृतहृन्नृपः, सौवमास्पदमासदत् ॥ ६२ ॥

प्रज्ञाप्य तद्गुरुं मन्त्रिद्वारा सैतामुपायत । पट्टराज्ञीपदं चादात्, किमदेयं प्रियाजने ॥ ६३ ॥

पङ्कप्रियोऽपि निःशङ्कं, दत्तास्तुष्टेन भूभुजा । बुभुजे कमलाः स्वैरं, त्यागभोगफला हि ताः ॥ ६४ ॥

शृण्वतः कुम्भकारस्यासंबद्धं योऽस्य वक्ष्यति । दण्ड्यः स चौरदण्डेन, पुरीत्याघोषयन्नृपः ॥ ६५ ॥

वर्षान्ते जातु राजा स, राजपाट्यामटाट्यते । सार्धं पङ्कप्रियेणासौ, पट्टदेव्या च खक्खया ॥ ६६ ॥
ता एव बदरीर्वीक्ष्य, राजा राज्ञीमभाषत । देवि ! केऽमी द्रुमा, ब्रूहि, साह जानामि न प्रिय ! ॥६७॥
श्रुत्वा पङ्कप्रियो राज्ञीवाक्यमीर्ष्याविसंस्थुलः । अचुकुट्टन्निजां मौलिं, शत्रुवद्दृढमुष्टिभिः ॥ ६८ ॥
ईर्ष्यापोषि वचः केनाश्राव्यतेति नृपेरितः । छन्देन प्राकृतश्छन्दः, प्राकृतं सोऽवदत्तदा ॥ ६९ ॥
कोंलि जि बोरइँ वीणती, आज न जाणइँ खक्ख । पुणरवि अडविह करिसु घरु, न सहउँ एह अणक्ख ७०
नृपो दध्यौ मया दत्ताधिपत्या यद्यसौ प्रिया । विस्मृतप्रागुदशा सौख्याल्लीलां नैवंविधां सृजेत् ॥ ७१ ॥
तदा मम प्रसादानां, महिमा कोऽस्तु वस्तुतः । साङ्कूरपूरा नोर्वी चेत्प्रभावोऽब्दस्य कस्तदा ॥ ७२ ॥
इयं लीलावतीदेवी, दण्डं नार्हति सर्वथा । व्याधिरेषोऽप्रतीकारश्चेद्वने याति यातु तत् ॥७३॥ विशेषकम् ।
विसृष्टो भूभुजा कुम्भकारः कान्तारमीयिवान् । कुटीरं सरसस्तीरे, प्राग्वत् कृत्वा स्थितश्चिरम् ॥ ७४ ॥
अन्यदा व्याघ्रबूत्कारान्नक्तं भूरि भयङ्करान् । श्रुत्वाऽनन्यगतिर्भूयोभयसङ्कुचिताङ्गकः ॥ ७५ ॥

---

१ कल्ये या बदराणि चिन्वती अद्य न जानाति खक्खा । पुनरप्यटव्या करिष्ये गृहं न सहेऽदोनाख्येयम् । ७० ।

खातभूमिसमुत्थायां, कुम्भिकायामथाश्मनः । आशुवृत्त्या प्रविश्यासौ, तत्र रात्रिमजीगमत् ॥ ७६ ॥
प्रातः सम्बाधवक्रायास्तस्या निर्यातुमक्षमः । दुःखेनाम्रियतालिख्य, गाथे द्वे पार्श्वयोर्द्वयोः ॥ ७७ ॥
अथ तत्र वने प्राप्ता, अन्विष्यन्तः सुता मुहुः । मृतं पितरमद्राक्षुर्गाथे च द्वे अवीवचन् ॥ ७८ ॥
वग्घभएण पविट्ठो, छुहाहओ निग्गमंमि असमत्थो । अट्ठवसट्टोवगओ, पुत्तय ! पत्तो अहं निहणं ॥७९॥
इह लोगंमि दुरंते, परलोग विबाहगे दुहविवागे । महवयणेणं पावे वज्जेज्जा पुत्तय ! अणक्खे ॥ ८० ॥
हितोपदेशोपनिषद्भूतां भूतार्थसाक्षिणीम् । धारयित्वेति ते गाथाद्वयीं धर्मजुषोऽभवन् ॥ ८१ ॥
सोऽपि दुःखसहस्रौघानैहिकामुष्मिकान्मुहुः । कुलालोऽन्वभवद्रोषदोषद्रुमफलोपमान् ॥ ८२ ॥
सहेतुरपि निर्हेतुरिव नेर्ष्या सुखावहा । कपिकच्छूरपि क्वापि, किमु सौख्याय जायते ? ॥ ८३ ॥

एवं दुरन्तदुरितोदयदुस्सहानि, दुःखानि चेत् क्षपयितुं प्रयतं मनो वः ।
ईर्ष्यां विमुच्य जिनकीर्त्तितधर्मतातं, वत्सास्तदाश्रयतसद्गुणपक्षपातम् ॥ ८४ ॥ वसन्ततिलका० ॥

इति श्रीतपागच्छनायकश्रीसोमसुन्दरसूरिविनेयश्रीजिनकीर्तिसूरिप्रणीते श्रीधन्यचरित्रशालिनि
श्रीदानकल्पद्रुमे लक्षद्वयार्जनो नाम द्वितीयः पल्लवः ॥ २ ॥

---

## अथ तृतीयः पल्लवः

अथ तातप्रयुक्ताभिस्ताभिरुक्तिभिरज्वलन् । मुद्गशैला इवाम्भोदधाराभिस्ते त्रयोऽधिकम् ॥ १ ॥

ऊचुः प्रचुरवाचश्च, तात ? सम्यग् विचारय । पणेनार्जि द्विलक्षी यत्तद्द्यूतं न वणिक्कला ॥ २ ॥

द्यूतव्यसनविज्ञस्य, तद्धन्यस्य कथं वयम् । सहेमहि गुणश्लाघां, व्यवसायर्[1]यवा पुनः ॥ ३ ॥

तैरित्युक्ते पुनर्भाग्यपरीक्षार्थं पितार्पयत् । वाणिज्याय चतुर्भ्योऽपि, स्वर्णमाषान् शतं शतम् ॥ ४ ॥

आद्यास्त्रयोऽग्रजास्ताद्यद्भाग्यमान्द्याः क्रयोद्यताः । आशु निर्गमयामासुर्मूलद्रविणमप्यमी ॥ ५ ॥

धन्यः स्वर्णादिवाणिज्यसञ्जाताऽशकुनः पुनः । पूर्वपुण्यप्रणुन्नोऽगात्काष्ठपीठीचतुष्पथम् ॥ ६ ॥

इतश्च–पुरि तत्रासीद्दानत्रासी धनाभिधः । श्रेष्ठी षट्षष्टिकोटीशः, कोटीरः कृपणात्मनाम् ॥ ७ ॥

जीर्णं शीर्णं परैस्त्यक्तं, वस्ते वासः स दासवत् । शुभमन्नं न चाश्नाति, न च स्नाति कदाचन ॥ ८ ॥

चीनकां[2]श्चनकान् वल्लाँस्तैलं चाप्यश्नतां नृणाम् । संख्यातिगधनोऽप्येष संख्याति कवलानपि ॥ ९ ॥

---

१ व्यवसायबलिनः । २ कुत्सितधान्यम् ।

स ताम्बूलपदे न्यास्थन्मुखे बब्बुलवल्कलम् । गृहस्थोऽपि तपस्वीव, प्रायो मूलफलाशनः ॥ १० ॥

व्ययभीरू रयादेव, देवसद्मनि न क्वचित् । न गीते न च सङ्गीते, व्यासङ्गी क्षणमप्यभूत् ॥ ११ ॥

प्रायोऽविहितकौपीनः, पीनतृष्णो वनेऽभ्रमत् । तृणकाष्ठकृते काष्ठाभ्रष्टः कष्टानि सासहिः ॥ १२ ॥

भिक्षाकान् वीक्ष्य धाम्नोऽदात्कपाटयुगलं पुरा । सोऽर्गलां गलहस्तं च, ततो गालीरनर्गलाः ॥ १३ ॥

पञ्चवस्तुप्रदोऽप्येवं, मार्गणेभ्यस्तथाप्यहो । अदातेव जने ख्यातो, न यत् पुण्यैर्विना यशः ॥ १४ ॥

युग्मम् ।

कपर्दिकाव्ययेऽप्यस्य, कारिते स्वजनैर्बलात् । मुखैः सप्तभिरभ्येति, ज्वरः प्राणहरस्तदा ॥ १५ ॥

एतस्य पश्यतो दानं, दीयते चेत्परैरपि । तदाप्यस्य शिरःपीडा, जाता व्रीडाकरी जने ॥ १६ ॥

अमुष्य धनिमुख्यस्यादुष्यदेवोदरं द्रुतम् । भुक्ते स्निग्धे विवाहेष्वप्यतीसारकिणो[1] यथा ॥ १७ ॥

समाल्यचन्दनादीनां, भोगं रोगमिवात्यजत् । ततः स्वजनवर्गेण, त्यक्तश्चाण्डालकूपवत् ॥ १८ ॥

---

१ अतिसाररोगवतः ।

मा ग्रहीषुर्धनं पुत्राः, प्रकटं प्राप्तयौवनाः । इत्यसौ द्रव्यकोटीभिरपणायन्मणीगणान् ॥ १९ ॥

शुषिरीकृत्य सोऽनर्घ्यैः, रत्नौघैर्भरितान्तराम् । लोभोल्लोलमहाम्भोधिर्महाखट्वामजीघटत् ॥ २० ॥

अभ्यागारिकतात्यागी, रागीव नवयोषिति । लीनोऽस्थात्तत्र खट्वायां, मोहतः स तमोहतः ॥ २१ ॥

वेद मेदस्वलाभाग्यो, मूढत्वान्नैतदप्यसौ । लक्ष्मीः सुरक्षिताप्येषा, ययौ सार्धं न केरपि ॥ २२ ॥

मृत्युः शरीरगोप्तारं, रक्षितारं धनं धरा । दुश्चारिणीव हसति, स्वपतिं पुत्रवत्सलम् ॥ २३ ॥

प्राप्तामपि श्रियं पापाः, नालं भोक्तुं कुकर्मभिः । द्राक्षापाकाशने काकाश्चञ्चुपाकान्विता न किम् ? ॥२४॥

अथ वृद्धोऽप्यहो मोहात्, ज्वररज्ज्ववलम्ब्यपि । भेषजद्वेषजम्बालेऽपतद् व्ययभियेव सः ॥ २५ ॥

तं मृत्युसमये पुत्रा, अमुत्र सुखहेतवे । प्रदातुं पुण्यपाथेयं, पप्रच्छुः क्वास्ति ते धनम्? ॥ २६ ॥

अभाणि प्राणितप्रान्तेऽप्येतेन तनयान् प्रति । कोटिसङ्ख्यमपि द्युम्नं, मया निर्गमितं ननु ॥ २७ ॥

ध्रातोऽहं सुकृतैः पूर्वं, कृतैरेव ततोऽधुना । याचे यदेव पाथेयं, देयं मह्यं तदेव तु ॥ २८ ॥

अखण्डयाऽनया सार्धं, खट्वया प्रियया मम । वत्साः कार्योऽग्निसंस्कारः, पाथेयैरपरैः कृतम् ॥ २९ ॥

निगद्यैवं सपद्येव, समपद्यत मूर्च्छितः । आलिङ्ग्य निबिडं खट्वां, स्थितश्चासौ प्रियामिव ॥ ३० ॥

पुत्रैरुत्पाट्यमानोऽपि, क्षमापीठे मुमुक्षुभिः । आत्मेव प्रकृतिं खट्वां, न मुमोच कथञ्चन ॥ ३१ ॥

अथ तत्प्रेयसी प्राह, वत्सा! जनकवत्सलाः । प्राणेभ्योऽतिप्रियां खट्वां, मा मोचयत सम्प्रति ॥ ३२ ॥

मृतः खट्वास्थितो निन्ये, ततः प्रेतवनं सुतैः । पित्राज्ञापालकैः क्षिप्तश्चितायां च तथैव सः ॥ ३३ ॥

श्मशानपालश्चाण्डालः, खट्विकां तामयाचत । नार्पितासौ यदा पुत्रैः, सञ्जातः कलहस्तदा ॥ ३४ ॥

वारिताः स्वजनैः पुत्रास्तस्मै पर्यङ्कमर्पयन् । स तं विक्रेतुमानिन्ये, काष्ठपीठचतुष्पथे ॥ ३५ ॥

मृतखट्वेति नागृह्णाद्द्विपाश्चित्कश्चिदप्यमूम् । अभिजानाति निर्भाग्यः, कृष्णां चित्रलतां कथम् ? ॥ ३६ ॥

धन्यस्तां क्रीतवान् रत्नगर्भां बुद्ध्वा स्वबुद्धितः । गत्वागारं गुणोदारः, पित्रादीनामदीदृशत् ॥ ३७ ॥

किमेतदिति मोहेपि, पित्रादिष्टा स्नुषा अमूम् । गृहान्तर्गृह्णते यावदुत्पाट्य रभसावशात् ॥ ३८ ॥

तावद्विघट्टिताङ्गायाः, खट्वाया रत्नवृष्टयः । अपूपुरन् गृहं विश्वमिव धन्यमहःश्रियः ॥ ३९ ॥ युग्मम् ॥

लक्षकोटिमितार्घाणां, रत्नानां वीक्ष्य धोरणीः । अहो भाग्यमहो भाग्यं, धन्यं सर्वेऽस्तुवन्निति ॥ ४० ॥

दानैरर्थिस्पृहा द्रव्यैर्गृहान् कीर्त्या जगन्त्यसौ। मित्राण्यभृत हर्षेण, तथामर्षेण सोदरान् ॥ ४१ ॥
धन्यं श्रितोदयं लोका, भास्वन्तं बह्वमंसत। तमःप्रकृतयः किन्तु नैव घूका इवाग्रजाः ॥ ४२ ॥
पुनरन्वशिषन् श्रेष्ठी, गिरा मधुरयाथ तान्। गुणग्रहं भजध्वम्भो! वत्सा निर्मुक्तमत्सराः ॥ ४३ ॥
यतः—पङ्कजान्यपि धार्यन्ते, गुणादानाज्जनैर्हृदि। राजापि पद्मसाद्गुण्यद्वेषी न क्षीयते कथम्? ॥ ४४ ॥
गुणान् गुणवतां ये न, श्लाघन्ते मत्सरान्नराः। क्षुद्रा रुद्रार्यवत्प्रेत्य, ते भवन्त्यतिदुःखिताः ॥ ४५ ॥
विद्वान् बहुपरीवारः, पञ्चाचारपरः पुरा। आचार्यो रुद्रनामाभूत्प्रभूतगुणभूषितः ॥ ४६ ॥
प्रसिद्धिपात्रं तद्गच्छे, चत्वारः साधवोऽभवन्। दानप्रभृतयो मूर्त्ता, धर्मभेदा इवोज्ज्वलाः॥ ४७ ॥
तेष्वाद्यो बन्धुदत्ताख्यो, वादलब्धिसमन्वितः। स्वान्यतीर्थिकतर्काणां, सर्वेषामपि वेदिता ॥ ४८ ॥
वादे येन जितौ मन्ये, सम्प्राप्तबहुलाघवौ। अद्यापि भ्राम्यतो व्योम्नि, तूलवद्गुरुभार्गवौ ॥ ४९ ॥
गद्यैः पद्यैर्गतावद्यैर्वर्गादिनियमान्वितैः। योऽनल्पं रचयन् जल्पं, न वर्षेणाप्यभज्यत ॥ ५० ॥
प्रभाकरो द्वितीयोऽर्हच्छासनाब्जप्रभाकरः। सदा मासोपवासादिसुदुस्तपतपःपरः ॥ ५१ ॥

आदाय मांसरक्ते यः, कृत्ययेव[1] तपःश्रिया। योगकार्मणयोगेन, वशीकृत्य कृशीकृतः ॥ ५२ ॥
आचामाम्लवर्धमानं, चक्रे रत्नावलीं च यः। सिंहनिष्क्रीडितं भिक्षुप्रतिमा अप्यनेकशः ॥ ५३ ॥
तृतीयः सोमिलो नाम्ना, नैमित्तिकशिरोमणिः। विद्वान् कालत्रयीमेष, पाणिरेखात्रयीमिव ॥ ५४ ॥
आन्तरिक्षं तथा भौममङ्गविद्यां स्वरोदयम्। चूडामणिं च शकुनं, केवली स कला अपि ॥ ५५ ॥
आयानष्टावपि स्पष्टान्, पुस्तकेन्द्रं विवेद यः। अमोघजिह्वः सर्वत्र, नृपामात्यादिबोधकृत् ॥ ५६ ॥ युग्मम्
अतिगाढक्रियानिष्ठस्तुरीयः कालकाभिधः। त्रिजगत्कण्टको येन, प्रमादचरटो जितः ॥ ५७ ॥
युगमात्रां भुवं पश्यन्, स पथि न्यश्चितेक्षणः। चचार मन्दं किं श्वभ्रजन्तूद्धरणचिन्तया ॥ ५८ ॥
विद्यानिर्गमभीत्येव, नोद्घाटवदनोऽवदत्। रजःशङ्कीव यो नालाद्, भाण्डाद्यप्रत्युपेक्षितम् ॥ ५९ ॥
तथा–दृष्टिपूतं न्यधात्पादं, सत्यपूतं जगौ वचः। आचचार मनःपूतं, सर्वपूतमयो हि यः ॥ ६० ॥
किञ्च तिस्रोऽपि यो गुप्तीः, पञ्चापि समितीः सदा। अष्टावाराधयामास, चारित्रजननीरिमाः ॥ ६१ ॥

---

१ कृत्या–इति देवभेदे।

विशिष्य पूजासत्कारानेषां लोका यदा व्यधुः । तदुत्कर्षासहो रुद्रः, खिद्यते स्म तदा हृदि ॥ ६२ ॥
न हि द्रष्टुं क्षमः क्षुद्रो, दीप्तिमन्तं स्फुरद्गुणम् । हत्वापि स्वं प्रदीपार्चिः, शलभोऽपहरेन्न किम्? ॥ ६३ ॥
अन्यदा तत्र कुसुमपुरतो[1] मुनियामलम् । सङ्घप्रहितमायासीत्, प्राह चागमकारणम् ॥ ६४ ॥
षट्तर्की विदुरो वादी, भिदुरो नाम सम्प्रति । जित्वान्यवादिनो गर्वादागात्पाटलिपुत्रकम् ॥ ६५ ॥
जितकाशितया जैनमुनीनपि जिगीषति । दग्धभूरीन्धनो ह्यग्निरश्मनोऽपि दिधक्षति ॥ ६६ ॥
दुर्वादिनममुं जेतुमागन्तव्यं ततो जवात् । आज्ञापयति वः सङ्घ, इत्यनुल्लङ्घ्यशासनः ॥ ६७ ॥
रुद्र उन्मुद्रविद्याब्धिः, श्रुत्वेति प्राचलद्द्रुतम् । विजिगीषुं क्षमन्तेऽन्यं, बुधा मल्ला नृपाश्च किम् ? ॥६८॥
निषिद्धोऽशकुनैर्बाढं, क्षुताद्यैः स न्यवर्त्तत । बहु श्रुता यतो न स्युर्निमित्तद्वेषिणः क्वचित् ॥ ६९ ॥
बन्धुदत्तं स्वशिष्यं स, वादिनं जेतुमादिशत् । सहस्रकिरणः प्रातर्ध्वान्तं हन्तुमिवारुणम् ॥ ७० ॥
बन्धुदत्तस्ततो गत्वा, पुरे पाटलिपुत्रके । वादिनाधिष्ठितां तेन, राजपर्षदमासदत् ॥ ७१ ॥

---

१ मुनियुग्मम् ।

भाग्यलभ्यास्ततः सभ्याः, सभामभ्यागताः समे । उभयाभिमतास्तत्त्वविवेकच्छेकबुद्धयः ॥ ७२ ॥
प्राप्ता वादावलोकाय, लोका अपि सहस्रशः । सिंहासनमथाध्यास्त, भूपतिः प्रास्तदुर्नयः ॥७३॥ युग्मम् ॥
सभायां चतुरङ्गायां, प्राग्वादी भिदुराभिधः । सौगतं मतमालम्ब्य, युक्तिजालमथालपत् ॥ ७४ ॥
यत्सत्तत् क्षणिकं सर्वं, दीपज्वालाकुलं यथा । सन्तश्च निखिला भावास्ततः क्षणविनश्वराः ॥ ७५ ॥
अथ बुद्धिनिधिर्बन्धुदत्तः स्याद्वादकोविदः । अवादीदुत्तरन्यायपटलीः स बलीयसीः ॥ ७६ ॥
स एवायमिति प्रत्यभिज्ञा स्थैर्यबलोद्भवा । अविसंवादिनी साधो! बाधते भवतोऽनुमाम् ॥ ७७॥
परः—ननु लूनपुनर्जातनखकेशाङ्कुरादिषु । स एवायमिति ज्ञानं, विसंवादि यथेक्षितम् ॥ ७८ ॥
तथा स्तम्भसभाकुम्भभूभृद्वनादिषु । अन्यथासिद्धमेवेदं, प्रत्यभिज्ञानमिष्यते ॥ ७९ ॥
एवं चेन्मृगतृष्णासु, मिथ्याम्भोऽध्यक्षमीक्षितम् । यथा तथा घटाध्यक्षमपि मिथ्या न किं भवेत्? ॥८०॥
तथा च सकलाध्यक्षेष्वप्रामाण्यप्रसङ्गतः । नानुमापि प्रमा ते स्याद्यत्सा प्रत्यक्षपूर्विका ॥ ८१ ॥
किञ्चार्थक्षणनाशित्वे, मातृघाती न कोऽपि यत् । यया जातो विनष्टा सा या त्वघाति परैव सा ॥ ८२ ॥

तथा न स्वपतिः कश्चिन्न, स्वभार्यापि काचन । ययोर्विवाहः सञ्जातस्तौ विनष्टौ तदैव यत् ॥ ८३ ॥
न्यासीकृतं याचते कः? कश्चार्पयति ते मते । अर्पकग्राहकौ नष्टौ, नष्टं न्यस्तं धनं च यत् ॥ ८४ ॥
याचिता भोजनस्यान्यो, भोक्ता तदपरः परम् । अन्य एव तथा भुक्तस्तृप्तः स्यादन्य एव हि ॥ ८५ ॥
एवं सर्वव्यवस्थानां, विलोपस्ते मते भवेत् । जैनेन्द्रं शासनं तस्माद्भद्र! भद्रङ्करं भज ॥ ८६ ॥
जिगाय न्यायवाचैवं, बन्धुदत्तः प्रवादिनम् । जितं जैनैर्जितं जैनैर्जातेत्याघोषणा पुरे ॥ ८७ ॥
स राज्ञा कृतसन्मानो, महोत्सवपुरस्सरम् । उपाचार्यमगाद्भट्टैः, पठितो बिरुदैरिति ॥ ८८ ॥
वादिगरुडगोविन्द । निर्जितवादिवृन्द । षड्भाषावल्लिमूल । परवादिमस्तकशूल । वादिकन्दकुद्दाल ।
वादिभूमीपाल । सरस्वतिभाण्डागार । चतुर्दश विद्यालङ्कार ॥
ततस्ताद्बिरुदव्रातैस्तदेकोत्कर्षवर्षिभिः । विद्धकर्णः सकर्णोऽपि, रुद्रोऽभूद्रोषमुद्रितः ॥ ८९ ॥
यतः—महतोऽपि भवेद्द्वेषः, सेवके तुङ्गतेजसि । कामदेवं महादेवः, किं सेहेऽधिकविक्रमम् ? ॥ ९० ॥
तेन स्तुतोऽपि स्तुतिभिः, सासूयं स वचोऽलपत् । दग्धाश्मा जलसिक्तोऽपि किमुद्वमति नानलम् ? ॥९१॥

अस्तु दूरे गुणश्लाघा, नो भाषणमपि व्यधात् । रुद्रार्यो बन्धुदत्तस्य, धिग् मौढ्यं महतामपि ॥ ९२ ॥

आसन्नसेवकेप्यन्तर्मलिनाः स्युर्निरादराः । लोचनं नहि पक्ष्मान्तान्, पार्श्वस्थानपि पश्यति ॥ ९३ ॥

दत्तोऽथासत्कृतस्तेन, त्यक्ताभ्यासोऽभवज्जडः । बालाराम इवासिक्तः, पत्रपुष्पफलोज्झितः ॥ ९४ ॥

इतश्च–निष्कृपः कृपणः क्रूरः, सरीसृप इवाऽनृजुः । नृपः कृप इति ख्यातः, साकेते पत्तनेऽभवत् ॥९५॥

कुर्वन् हिंसामृषावादस्तेन्याब्रह्मादिपातकम् । न कुसिद्धान्तविभ्रान्तस्वान्तः श्रान्तः कदाप्यसौ ॥ ९६ ॥

अजमेधमश्वमेधं, नृमेधं च पुरोधसा । गोमेधमपि दुर्मेधा, नैकशः स व्यधापयत् ॥ ९७ ॥

अनुद्विग्नं द्विजेभ्योऽदात्, सगर्वः सर्वपर्वसु । विधाय सुरभीरेष, तिलसर्पिर्गुडादिभिः ॥ ९८ ॥

जैनानामनगाराणां, दुष्टो बाधामसौ व्यधात् । साकेतं मुनिभिस्त्यक्तं, तत्ससर्पनिकेतवत् ॥ ९९ ॥

सोमिलर्षिर्निमित्तज्ञो, रुद्राचार्यं जगाविति । निमित्तकलया स्वामिन् ! बोधयेऽहं कृपं नृपम् ॥ १०० ॥

अनुज्ञातोऽथ गुरुणा, सोमिलः करुणार्णवः । साकेतं प्राप्य मुख्यस्य, स्थितः सद्मनि मन्त्रिणः ॥१०१॥

नव्यावासे प्रवेशाय, द्विजैर्लग्ने समर्पिते । सामग्रीं कारयामास, तत्रैव च दिने नृपः ॥ १०२ ॥

सचिवं सोमिलोऽवोचन्निमित्तज्ञानकोविदः । निषेध्योऽद्य त्वया राजा, प्रविशन् भवने नवे ॥ १०३ ॥

अकाले विद्युतः पाताद्यदेतत्प्रपतिष्यति । सद्य एव निशीथेऽद्य, पाता नास्तीह कश्चन ॥ १०४ ॥

मूर्तं कालमिव व्यालं, स्वप्ने भूपाल ऐक्षत । अभिज्ञानादतः सत्यं, मदुक्तं बुध्यतामिदम् ॥ १०५ ॥

॥ त्रिभिर्विशेषकम् ॥

अवोचत् सचिवः सर्वं, भूभुजे मुनिभाषितम् । स्वप्नोऽनुक्तः कथं ज्ञात, इत्यसावपि विस्मितः ॥ १०६ ॥

न जगाम नवं धाम, राजा सञ्जातसाध्वसः । निशीथे तडितः पातात्प्रासादश्च पपात सः ॥ १०७ ॥

असुनेति मुनेर्ज्ञानातिशयं वीक्ष्य भूभुजा । हृदि निर्णीतं यदुत, ज्ञाता जैनात्परो नहि ॥ १०८ ॥

आह्वयत्प्रास्तदौरात्म्यसात्म्यप्राप्ततपःक्रियम् । सोमिलं भूमिलन्मौलिर्ननाम च महीपतिः ॥ १०९ ॥

सुदूरीकृतमिथ्यात्वो, धर्ममूरीचकार सः । जैनेन्द्रं मुनिनाऽख्यातं, जातश्च परमार्हतः ॥ ११० ॥

भक्तिव्यक्तिमिलल्लोकप्रणतः किल सोमिलः । रुद्राचार्यसमीपेऽगादिलापतिकृतोत्सवः ॥ १११ ॥

भक्त्या गुरुं ननामासौ, न नामास्मिन्नपि द्विषम् । सोऽमुचन् मनसः किन्तु, मूढोऽमर्षमदद्रढत् ॥११२॥

स च प्रभाकराद्याश्च, योग्या अप्यमुना गुणैः । अश्लाघया हतोत्साहाः, स्वार्थशैथिल्यमापिताः ॥११३॥

असीदच्च समग्रोऽपि, गणस्त्यक्तोपबृंहणः । भग्नपालिप्रबन्धः किं तटाको नैव शुष्यति ? ॥ ११४ ॥

किल्बिषौघेन तेनासौ, रुद्रः किल्बिषिकेष्वगात् । प्रवेशमपि न प्राप, पापो देवसभादिषु ॥ ११५ ॥

चिरं दुःखी ततश्च्युत्वा, जन्ममूको द्विजोऽजनि । रागाक्रान्तो दरिद्रश्च, मृत्वा भ्रान्तश्चिरं भवे ॥ ११६ ॥

आगमाम्भोधिपारीणोऽप्याचार्यगुणधार्यपि । रुद्रार्यः प्रापितो घोरमेकयैव गुणेर्ष्यया ॥ ११७ ॥

ध्मातायस्पिण्डकल्पानां, गृहस्थानां तु का कथा । सौम्यास्तत्सम्यगालोच्य, भवेत गुणरागिणः ११८ युग्मम्

पित्रोक्तमिति ते श्रुत्वा, तस्थुः कत्यपि वासरान् । अन्तः सेर्ष्या बहिः शान्ता, भस्मच्छन्ना इवाग्नयः ११९

श्रेष्ठी त्वसौ धन्यकुमारपुण्यैः, षट्षष्टिकोटिद्रविणोल्बणोऽभूत् ।

दौःस्थ्यं जने भङ्कुमिवावतीर्णः, श्रीदः पृथिव्या धनसारसंज्ञः ॥१२०॥ (इन्द्रवज्राष्टृत्तम्)

द्वेषितां गुणिषु रुद्रमुनीन्द्रोपद्रवौघजननीमवबुध्य ।
रागिता गुणविराजि न कीर्त्ति-श्रीपुषं श्रयत पुंसि बुधाः! किम्? ॥ १२१ ॥ स्वागता ॥

इति श्रीतपागच्छनायकश्रीसोमसुन्दरसूरिविनेयश्रीजिनकीर्त्तिसूरिप्रणीते श्रीधन्यचरित्रशालिनि श्रीदानकल्पद्रुमे षट्षष्टिकोटिद्रव्यानयनो नाम तृतीयः पल्लवः ॥ ३ ॥

---

## अथ चतुर्थः पल्लवः

भ्रातरस्तेऽथ सौभ्रात्रं, धन्येन श्रीमता सह । अदीदृशँस्तातचित्तानुवृत्त्यै कतिचिद्दिनान् ॥ १ ॥

प्रतिष्ठानपुरेशाज्ञासम्बान्धिधन्यम्बुधेस्तटे । वातनुन्नोऽन्यदा पोतो, मृतस्वामिक आगमत् ॥ २ ॥

यानपात्रजना राज्ञा, सत्कृत्य वसनादिभिः । विसृष्टा दत्तपाथेयाः, स्वं स्वं स्थानं गतास्ततः ॥ ३ ॥

गोदायाः स्रोतसा पोतः, सागरान्नगरान्तिकम् । आकृष्य नाविकैर्नीतो, मन्दं मन्दं स पोतवत् ॥ ४ ॥

कृत्स्नोत्तारितभाण्डस्य, तस्याविरभवँस्तले । सुयत्नस्थापिता नैके, कलशाः क्षारमृद्भृताः ॥ ५ ॥

दुष्प्रापं लवणं नूनं, पोतेशस्य पुरे ततः । तेनात्ता क्षारमृत्स्नैषा, भूपाद्या इत्यचिन्तयत् ॥ ६ ॥

प्रतिष्ठानपुराद्राज्ञानुज्ञाता व्यवहारिणः । वस्तूरीकर्तुमायाताः, कस्तूरीप्रमुखं ततः ॥ ७ ॥

धन्योऽपि प्रहितः पित्रा, चित्राधायिपवित्रधीः । सार्धं महाजनेनागाद् , भागादानाय वस्तुनः ॥ ८ ॥

विभज्य जगृहुः सर्वमीश्वरास्तत्क्रयाणकम् । बालोऽयं वञ्च्यतां धन्य, इत्यस्मै च मृदं ददुः ॥ ९ ॥

परीक्षकशिरोरत्नमूषमूल्येन तां मृदम् । लात्वा सर्वां गृहं निन्ये, तत्प्रभावं स आह च ॥ १० ॥

येषां स्पर्शवशात्तात! शातकुम्भीभवेदयः । तेषां स्पर्शाश्मनां खानेर्मृदेषा पार्श्ववर्त्तिनी ॥ ११ ॥
चूरिका विश्वदौःस्थ्यस्य, नाम्ना तेजनतूरिका । हेमीभवेल्लवेनास्या, विद्धं ताम्रपलाष्टकम्॥१२॥युग्मम् ॥
ध्मायन्ध्मायन् विधेस्ताम्राण्यन्तः क्षिप्त्वा च तां मृदम् । अतन्तन्यत धन्योऽथ, स्वर्णकोटीरनेकशः ॥१३॥
प्रीतौ मातरपितरौ, हर्षितास्स्वजनास्समे । अचित्रीयन्त चतुरा, अप्यन्ताश्चित्तमीश्वराः ॥ १४ ॥
भूपोऽप्यस्य ददौ भूरिभाग्यातिशयरञ्जितः । कनिष्ठस्यापि स श्रेष्ठि-पदं ज्येष्ठस्य धीगुणैः ॥ १५ ॥
अथ न्यायविदां मान्यः, स महांसि यशांसि च । अमित्रशोषतो मित्रपोषतोऽपूपुषत्तराम् ॥ १६ ॥
प्रसत्तिपात्रं भूपस्य, पूज्यस्सामन्तमन्त्रिणाम् । सभासीनोऽपर इव, राजा धन्यो जनैर्जगे ॥ १७ ॥
अन्यदा सम्मदाकीर्णभट्टोद्गीर्णगुणस्तुतौ । वाद्यमानघनातोद्यैः, सश्रीकश्रीकरीततौ ॥ १८ ॥
स्वीयमश्वीयपादातहास्तिकव्राजितान्तिके । सौधं भूपसभात्प्राप्ते, धन्ये ते बान्धवब्रुवाः ॥ १९ ॥
अमानीभूतमात्सर्यहिमानीविनिपाततः । प्लुष्टसत्प्रतिभाङ्कुरपूराः क्रूरा अमन्त्रयन् ॥ २० ॥
आः कथं जीवति प्रौढिमास्मिन्नाशास्महे वयम् । स्फुरद्धानौ कथं भानौ, तारकाः स्फारकान्तयः ॥ २१ ॥

निजोऽयमिति नोपेक्ष्यः, स्वमहत्त्वक्षयप्रदः । स्वाङ्गजोऽपि न किं दत्ते,? व्याधिराधिमुपेक्षितः ॥ २२ ॥
तदयं सदयं भावं, परित्यज्य विनाश्यते । दीप्यते हि प्रदीपोऽपि, दग्ध्वैव जनकं गुणम् ॥ २३ ॥
॥ षड्भिरर्थतः कुलकम् ॥

मन्त्रं सुगुप्तमप्येषां, धन्योऽज्ञासीत्कथञ्चन । पातालगतमप्यम्बु, बुध्यन्ते न कथं बुधाः ॥ २४ ॥

उक्तञ्च–उदीरितोऽर्थः पशुनापि गृह्यते, हयाश्च नागाश्च वहन्ति नोदिताः ।
अनुक्तमप्योहति पण्डितो जनः, परेङ्गितज्ञानफला हि बुद्धयः ॥ २५ ॥ वंशस्थम् ॥

स्वगुणैः प्रीणिताः कामं, भ्रातृपत्न्योऽपि भक्तितः । व्यजिज्ञपन्नुपांशु[1] स्वभर्त्राकूतममुं प्रति ॥ २६ ॥
धन्यो व्यचिन्तयाञ्चिक् तं, मानुषं स्वानुषङ्गतः । विवेककलहंसोऽपि, कलहं यः प्रदीपयेत् ॥ २७ ॥
बन्धूनां गुणसिन्धूना-मामयेनेव नो मया । अत्र स्थितेन सौख्यं स्या-द्यामि देशान्तरं ततः ॥ २८ ॥
कलासु कौशलं भाग्यं, बलं स्थेम च हेमवत् । दक्षैः परीक्ष्यते नानादेशभ्रमकषोपले ॥ २९ ॥

---

१ उपांशुर्जपभेदे स्यादुपांशु विजनेऽव्ययम् । इति हैमः ।

मनोविनोदकारीणि, धन्या एव पदे पदे । निधानानीव वीक्षन्ते, कौतुकानि महीतले ॥ ३० ॥
ध्यात्वेति धनसारस्य, तनयः समजायत । देशावलोकनक्रीडानीडालीनमनःखगः ॥ ३१ ॥
रजन्यां सोऽनजेन्यायां, गृहे किञ्चिन्महे सति । निरगाच्चिरगानेन, श्रान्तसुप्तजनेऽन्यदा ॥ ३२ ॥
स मालवान् रमाकेलिपदं जनपदं व्रजन् । मध्याह्ने क्षुधितः किञ्चित्, क्षेत्रं नेत्रपथेऽकरोत् ॥ ३३ ॥
हालिकः पार्वणैस्तत्र, शालिदालिघृतादिभिः । न्यमन्त्रयत तं धन्यं, धन्यंमन्यः श्रमार्दितम् ॥ ३४ ॥
साहसी प्राह धन्योऽपि, भुञ्जेऽहं स्वभुजार्जितम् । सिंहाः सत्पुरुषा यत्र, परान्नाः क्षुधिता अपि ॥३५॥
क्षणं कृषामि ते क्षेत्रं, भोक्ष्येऽहममृतं ततः । भुक्तिर्भुजार्जिता दत्ते, गौरवं शस्यगौरवम् ॥ ३६ ॥
स उक्त्वेति हलं यावत्करे गृह्णाति तावता । निधिः प्रादुरभूद्भाग्यभाजां सर्वत्र सम्पदः ॥ ३७ ॥
यतः—निरीहस्य निधानानि, प्रकाशयति काश्यपी । बालकस्य निजाङ्गानि, न गोपयति कामिनी ॥३८॥
स्वर्णपूर्णं निधिं धन्यो, हालिकायार्पयत्ततः, । उदाराणामदेयं किं?, किमज्ञेयश्च योगिनाम्? ॥ ३९ ॥

---

१ अजन्यमीतिरुपात इति हैम. ।

उपकृत्येति तद्भक्तं, भुक्तवानग्रतोऽगमत् । विश्वोपकारव्यसनी, नैकत्र स्थास्नुरर्कवत् ॥ ४० ॥
हली निश्शङ्कतल्लक्ष्मीविलासैककुतूहली । धन्यवृत्तान्तमाचष्ट, तं हृष्टः पृथिवीभुजे ॥ ४१ ॥
सोऽपि धन्यकथां श्रुत्वा, तद्भाग्याद्भुतविस्मितः । निधानं हलिने तस्मै, ददौ सन्तुष्टमानसः ॥ ४२ ॥
धन्यनाम्ना पुरं क्षेत्रभुवि संस्थाप्य हालिकः । निदेशान्नृपतेस्तत्र, तस्थावनुभवन् सुखम् ॥ ४३ ॥
अथ धन्यो व्रजन् ग्राममेकमाप दिनात्यये । तपात्यये यथा हंसो, मानसं मानसङ्गतः ॥ ४४ ॥
तत्राशेत स नादेयवालुकायामनाकुलः । रतिस्तुल्यैव पर्यङ्के, दर्यङ्के वा मनो यदि ॥ ४५ ॥
बुबुधेऽपररात्रेऽसौ, परमेष्ठिस्तुतिं पठन् । निद्राऽऽहारकलिक्रोधकामाः क्षामाः सतां यतः ॥ ४६ ॥
शुश्राव श्रावकः सोऽथ, शिवाशब्दं शिवावहम् । निमित्तान्यनुकूलानि, प्रायः स्युर्महतां यतः ॥ ४७ ॥
धन्यो दध्यौ निमित्तज्ञो, ननु किं सूचयत्यसौ । रात्रौ शिवा दिवा दुर्गा, यदि वा नो मृषा भवेत् ॥४८॥
गृहाण द्रविणं पूर्ण, सौम्य ! तूर्णमिदं स्वयम् । भक्ष्यं च मे प्रदेहीति, नूनमेषा विनिर्दिशेत् ॥४९॥ युग्मम्
शिवारावानुसारेण, नीरतीरं जगाम सः । धनायन्नशनायन् यत्, कौतुकी चापि नालसः ॥ ५० ॥

सरिन्नीरे तरन्नेषोऽपश्यन्मृतकमागतम् । दूरे तमपि पूरेणानीतं स्वस्येव कर्मणा ॥ ५१ ॥
लात्वा रत्नानि तत्कट्यास्तव्यामानीय चार्पयत् । शिवायै मृतकं येन, शुभाय शकुनार्चनम् ॥ ५२ ॥
अवन्ध्यधीः स विन्ध्याद्रिं, संसारमिव दुर्गमम् । उल्लङ्घ्योज्जयनीमाप, मुनीन्द्र इव निर्वृतिम् ॥ ५३ ॥
प्रद्योतनप्रतापोऽभू-त्तत्र प्रद्योतभूपतिः । यस्य खड्गोऽरिवर्गश्च, समं कम्पमवापतुः ॥ ५४ ॥
बुद्ध्याभयकुमाराभममात्यं स गवेषयन् । निजपुर्यां परीक्षायै, घोषणामित्यकारयत् ॥ ५५ ॥
समुद्राख्यसरोमध्यस्तम्भं पालिस्थ एव यः । रज्ज्वा बध्नाति तस्मै भो!, दत्ते मन्त्रिपदं नृपः ॥ ५६ ॥
पटहोद्घोषणामेनां, निवार्य धनसारसूः । निष्पापप्रतिभः प्रापदुपभूपं जनावृतः ॥ ५७ ॥
चण्डप्रद्योतभूपस्य, प्राप्यादेशमसौ सुधीः । पालौ सालौघशालिन्यां, सरसस्तस्य जग्मिवान् ॥ ५८ ॥
रज्ज्वा पालिस्थसालांह्रिबद्धयाऽतिप्रलम्बया । परितोऽम्बुभ्रामितया, मुहुः स्तम्भमवेष्टयत् ॥ ५९ ॥
ग्रन्थिं प्रदाय चाकृष्य, तया स्तम्भं बबन्ध सः । राजादिजनतास्वान्तामिव सौवगुणश्रिया ॥६०॥ युग्मम् ।
विवेकविस्मितो राजा, तस्मै मन्त्रिपदं ददौ । आलोकमुदितो लोक, इवार्घं बालभास्वते ॥ ६१ ॥

शुचिपक्षमथासाद्य, प्रसादं भूपतेरसौ। जज्ञे कुवलयोल्लासी, मन्त्रीन्दुः स कलाधिकः ॥ ६२ ॥

ददर्श दर्शशीतांशुदुर्दशं विगलद्वसुम्। सकुटुम्बं स्वपितरं, भ्रमन्तं स पुरेऽन्यदा ॥ ६३ ॥

गृहे नीत्वा विनीतात्मा, पितृभ्रातॄन् कृतानतिः। किमेतदिति पप्रच्छ, स्वच्छधीस्तुच्छवैभवान् ॥६४॥

पिता प्राह गते वत्स! त्वयि गेहात् कलावति। कौमुदीव पलायिष्ट, कमला विमलाशय! ॥ ६५ ॥

पद्माकराणामस्माकं, त्वयि भास्वति निर्गते। राजदण्डोऽभवच्चण्डोऽखिललक्ष्मीविखण्डनः ॥ ६६ ॥

चौरधाट्या विपाट्याथ, सद्म पद्मोज्झितं कृतम्। दग्ध्वाऽग्निना ततः शेषं, भस्मशेषं च निर्मितम् ॥६७॥

कृष्णपक्षेन्दव इव, निर्वसुत्वेन निष्कलाः। जगन्मित्र! भवत्पार्श्वे, प्राप्ता वसुविवृद्धये ॥ ६८ ॥

प्रजावत्यस्तथा ज्येष्ठभ्रातरः पितरौ च तौ। धन्येन सत्क्रियन्ते स्म, वस्त्राभरणैर्धनैः ॥ ६९ ॥

युक्तं यत्कुमुदात्मभ्यो, बान्धवेभ्यो ददौ मुदा। सोमः कलावतां मुख्यः, श्रियं धन्यः श्रितोदयः ॥७०॥

अस्य प्रभाकरस्याथ, तथैव द्युतिमन्यदा। युक्तं तैस्तामसैः सोढुं, न प्रौढैरजनि त्रिभिः ॥ ७१ ॥

---

१ भ्रातृजायाः।

सन्तोषप्लोषमाधाय, रोषपोषविशं(सं)स्थुलाः । लोभबाहुल्यतः प्राहुस्ततस्ते जनकं प्रति ॥ ७२ ॥

सर्वे पृथक् भविष्यामः, श्रीणां भागं समर्पय । धन्येन सह वत्स्यामस्तात ! नातः परं वयम् ॥ ७३ ॥

पितापि तान् प्रति प्राह, वत्सा ! यत्साम्प्रतं धनम् । भवद्भिर्याच्यते तत्किं, प्रागस्यास्ति समर्पितम् ?७४

स्मरथ स्वपुराद्यात्रमात्रेणाऽत्रागमिष्यथ । कामं च सत्करिष्यध्वे, धन्येन धनराशिभिः ॥ ७५ ॥

घूका इव गिरो घोरा, वावदूका अथावदन् । तेऽपि वेपितसौजन्यास्तदा धन्याग्रजा इति ॥ ७६ ॥

: स्नेहहीनोऽसौ, साररत्नानि भूरिशः । मलिम्लुच इवादाय, निर्गतोऽत्रागतः पितः ! ॥ ७७ ॥

धनेन तेन नीतोऽसौ, प्रौढिमेतावतीमिह । श्रिया रत्नाकरत्वं यत्, क्षारोऽप्यारोपितोऽम्बुधिः ॥ ७८ ॥

॥ त्रिभिर्विशेषकम् ॥

स्वमूलं कलहोच्छेदं, मत्वा सत्त्वाधिकः सुधीः । पद्मासद्मादिकं त्यक्त्वा, निर्ययौ पुनरप्यसौ ॥ ७९ ॥

शोभनैः शकुनैर्नुन्नः, प्रस्थितो मगधान् प्रति । सुप्रकाशीभवद्भाग्यः, प्राप काशीपुरीमसौ ॥ ८० ॥

१ 'अयदि स्मृत्यर्थे भविष्यन्ति' ५।२।९। इत्यनेन भूतार्थे भविष्यत् प्रयोगः ।

ग्रीष्मार्कतप्तसर्वाङ्गो, रेवायामिव सामजः ॥ ८१ ॥
गङ्गायां सत्तरङ्गायां, जलकेलिमसौ व्यधात् । गङ्गाधिष्ठायिनी देवी, कामरागातुराऽभवत् ॥ ८२ ॥
विलोक्याभङ्गसौभाग्यं, रूपमस्याद्भुतं तदा । के? हि स्मरशरासारे, दुर्निवारे सति स्थिराः ॥ ८३ ॥
रागातिरेकादेतस्याश्चेतस्याकुलताऽजनि । मोहनायाऽथ धन्यस्य, हावभावान् व्यधाद्बहून् ॥ ८४ ॥
प्रत्यक्षीभूय सा दिव्यरूपा मोहेन भूयसा । अजिह्मब्रह्मसन्नाहं, सोऽपि धीरो दधौ हृदि ॥ ८५ ॥
अमूढलक्ष्या चिक्षेप, सा कटाक्षान् शरानिव । व्याकोशानिव कामस्य, कोशान् साऽदीदृशन् मुहुः ॥ ८६ ॥
दोर्मूलत्रिवलीमध्यनाभिभ्रूकुचविभ्रमान् । धन्ये व्यर्थीभवन्ति स्म, वज्रे लोहघना इव ॥ ८७ ॥
हावभावाः कृतयुवमनोद्रावास्तया कृताः । उद्दीपनगुणां वाणीमभाणीदिति सोन्मदा ॥ ८८ ॥
सशृङ्गाराऽनगाराणामपि क्षोभं वितन्वती । स्वाङ्गसङ्गसुधाकुण्डे, सुभग ! क्रीडयाशु माम् ॥ ८९ ॥
कामं कामानलज्वालैस्तापितां शफरीमिव । मातर्नातः परं वाच्यमेवं धर्मविरोधकृत् ॥ ९० ॥
गङ्गादेवीमवग्धन्यः, परनारीपराङ्मुखः । मन्मनः कमनच्छद्मसि ब्रह्ममन्त्रपवित्रितम् ॥ ९१ ॥
तव वक्षोजरक्षोजविक्षोभैर्न बिभेत्यदः ।

निर्मन्दाक्षाः कटाक्षास्ते, कालकूटा इवोत्कटाः । व्यथयन्ति न मे चित्तं, जिनवाक्यामृतप्लुतम् ॥ ९२ ॥
काकुरङ्गाः कुरङ्गाक्षि! कुरङ्गा इव तावकाः । शक्ताः स्प्रष्टुं न मे जाग्रद्दमासिंहां मनोगुहाम् ॥ ९३ ॥
नैते ते मन्मनोल्लोपा, मन्मनोवृत्तिभेदिनः । शिरीषसुमनःपुञ्जाः, कृपाण्याः किमु भेदकाः? ॥ ९४ ॥
विभ्रमास्तव वामभ्रु! सरसा अपि मेघवत् । मच्चित्त ऊषरे क्षेत्रे, न रागाङ्कूरपूरकाः ॥ ९५ ॥
सकामास्तव वामाक्षि! हावा दावा इवोल्बणाः । शास्त्रसागरमग्नं मां, न तापयितुमीशते ॥ ९६ ॥
नरकान्तासुखाधायिपरकान्तापराङ्मुखे । यत्र मय्यफलारम्भा, रम्भाप्यत्र त्वकं हि का? ॥ ९७ ॥
श्वभ्रज्वालावलीसङ्गभीरुः को भीरु! वाञ्छति । मीनकेतनरुग्णोऽपि, परकान्तासु चेतनः ॥ ९८ ॥
क्षणमत्र सुखं प्रेत्य, दुरन्ताः श्वभ्रवेदनाः । येऽदः प्राज्ञासिषुः प्राज्ञास्ते स्मराज्ञापराः कथम्? ॥ ९९ ॥
वरं ज्वालावलीसङ्गः,प्रविश्यान्तर्दवानलम्, । नान्यस्त्रीत्रिवलीरङ्गस्तरङ्गः श्वभ्रवारिधेः ॥ १०० ॥
यदुक्तम्—नपुंसकत्वं तिर्यक्त्वं, दौर्भाग्यं च भवे भवे। भवेन्नराणां स्त्रीणां चान्यकान्तासक्तचेतसाम् १०१
सङ्गाः सन्ध्याभ्ररङ्गाभा, आयुर्वायुवदस्थिरम् । भोगाभोगास्तथा रोगा इवोद्वेगाय भामिनि! ॥ १०२॥

सदाचाराङ्कुरोद्भेदे, कादम्बिनि ! नितम्बिनि ! । वीतरागं मनः कृत्वा, वीतरागं ततः स्मर ॥ १०३ ॥

धर्मकार्ये सदाकार्ये, कार्यैं गजनिमीलिका ? । यन्नैव दैवतस्यापि, प्रत्येति गलितं वयः ॥ १०४ ॥

अमृतस्यापदेशेन, सन्देशेन सुखश्रियाम् । गङ्गा धन्योपदेशेन, गतरागा जगाविति ॥ १०५ ॥

नन्द मे रागदावाग्निशमनैकनवाम्बुद ! । मोहान्धकारसंहारदिवाकर ! चिरं जय ॥ १०६ ॥

यन्न देवाङ्गनाहावैरक्षोभीः सुभटोऽसि तत् । त एव वीरा नासीराक्षिप्ताः क्षिप्तायुधा न ये ॥ १०७ ॥

सदाचारशिरोरत्न !, रत्नगर्भा त्वया मही । अहमप्यभवं पूता, धूताघा तव दर्शनात् ॥ १०८ ॥

व्यदिध्यपन्मे कामाग्निं, कुल्यातुल्यापि गीस्तव । अशीशमन्न यं नीरपूरो दूरोन्नतोऽप्यहो ॥ १०९ ॥

लोकद्वयसुखाधायिधर्मरत्नप्रदायिने । कथं स्यामनृणा तुभ्यं, दत्त्वा रत्नानि सम्प्रति ॥ ११० ॥

चिन्तारत्नं तथाप्येतद्गृहाणानुगृहाण माम् । अतिथेरातिथेयी स्याद्यत् स्वगेहानुसारतः ॥ १११ ॥

अतिनिर्बन्धतो रत्नं, धन्यो ग्रन्थौ बबन्ध तत् । स्वगुणश्रेणिभिश्चैष, हृदयं दैवसैन्धवम्[2] ॥ ११२ ॥

---

१ का आर्ये ! इति च्छेदः । २ गङ्गासबन्धि ।

क०

सञ्जातधर्मरङ्गाऽगाद्रङ्गागारं निजं ततः । प्रतस्थे सुव्रतस्थेमा, धन्यो राजगृहोत्सुकः ॥ ११३ ॥

धन्यो धन्यवदान्यमान्यमहिमा देशान्तरेऽपि भ्रमन्,
चिन्तारत्नवितीर्णपूर्णविभवः सौख्यानि यद्वैभवात् ।
क्लेशानाकुलितान्यभुङ्क्त सततं श्रीदानपुण्ये रतिं,
भो भव्या ! जिनकीर्तितेऽत्र कुरुत प्रेप्सा सुखानां यदि ॥ ११४ ॥ ( शार्दूलविक्रीडितम् )

इति श्रीतपागच्छनायकभट्टारकप्रभुश्रीसोमसुन्दरसूरिविनेयश्रीजिनकीर्तिसूरिप्रणीते, श्रीधन्यचरित्रशालिनि,
श्रीदानकल्पद्रुमे सुवर्णसिद्धिविदेशप्रस्थानवर्णनो नाम चतुर्थः पल्लवः ॥ ४ ॥

---

# अथ पञ्चमः पल्लवः

नगधान्यधनै रुद्धान्, मगधान् मागधानिव । दृष्ट्वा(ष्टया) प्रसन्नयोदारसुख्यः सोऽथाकृतार्थयत् ॥ १ ॥

देवाचार्य इवाऽहार्यचातुर्यः पर्यटन् क्रमात् । असौ राजगृहं प्राप, युक्तं प्रोच्चपदेप्सया ॥ २ ॥

हारिणां यत्र रूपेण, हर्म्याणि व्यवहारिणाम् । हसन्तीव विमानानि, सामराणि मणित्विषा ॥ ३ ॥

यत्रार्काश्ममयो वप्रश्चन्द्राश्मकपिशीर्षभृत् । खाताम्बुनः शोषपोषौ, रवीन्द्वोरुदयेऽकरोत् ॥ ४ ॥

तथा—मणीमयैस्तुङ्गगृहैर्यदीयैः, समग्रलक्ष्मीसुषमाभिरामैः ।
गृहीतसारा इव वायुनोर्ध्वं, नीता लघुत्वाद् द्युसदां विमानाः ॥ ५ ॥ ( उपजातिः )

रत्नाजिरे तोरणकेकिबिम्बग्रहाय निक्षिप्तकरा विलक्षा ।
क्रीडामयूरग्रहणेऽपि पश्चात्, विलम्बमालम्बत यत्र मुग्धा ॥ ६ ॥

---

१ राजा निशो रत्नकरौ च चन्द्र इति हैमः ।

कथं भुवो यस्य[1] बुधोऽपि वक्तुं, शक्नोत्वऽशेषं गरिमातिशेषम् ।

श्रीवर्धमानस्त्रिजगत्प्रभुर्यो[2]मपूपुजत्स्वस्य पदारविन्दैः ॥ ७ ॥

यत्र ग्रहानुच्चगृहा निनादैर्ध्वजाग्रजाग्रन्मणिकिङ्किणीनाम् ।

पृच्छन्ति मन्ये नगरं किमीदृग्, दृष्टं भुवि क्वापि रमाभिरामम्? ॥८॥ सप्तभिः कुलकम् ॥

रक्षन्नष्टादशश्रेणीर्गुणश्रेणीरिवाभवत् । न्यायसौधाग्रनिःश्रेणिः, श्रेणिकस्तत्र भूपतिः ॥ ९ ॥

यस्य कीर्त्तिप्रतापाभ्यां, रेजिरे दिग्मृगीदृशः । सितारुणाभ्यां श्रीखण्डकुङ्कुमाभ्यामिवार्चिताः ॥ १० ॥

छिन्ना यस्य कृपाणेन, रेजिरे समराजिरे । दन्तावलघटादन्ता, यशोवृक्षाङ्कुरोपमाः ॥ ११ ॥

यस्याभयकुमाराख्ये, पुत्रे मन्त्रिपदाश्रिया । चामीकर इव भ्रेजे, भृशं सौरभसम्पदा ॥ १२ ॥

सम्यक्त्वं क्षायिकमापि, यस्य क्षितिपतेरहो । सौख्यमक्षायिकं दातुं, प्रभविष्यति मोक्षजम् ॥ १३ ॥

वीरं स्वर्णयवानां चाष्टोत्तरेण शतेन यः । प्रत्यहं भक्तितोऽभ्यर्चन्नर्हन् भावी भवान्तरे ॥१४॥ षड्भिः कुलकम् ॥

---

१ राजगृहस्य । २ या भुवम् ।

प्रसत्तिपात्रं तस्यासीन्मगधानामधीशितुः । श्रेष्ठी कुसुमपालाख्यः, कल्पसाल इवार्थिनाम् ॥ १५ ॥
अथ तस्य महेभ्यस्य, जीर्णशीर्णतरूत्करम् । उद्यानमासदद्धन्यः, श्रान्तः सायं स भाग्यवान् ॥ १६ ॥
वसन्तेनेव तेनेदमागतेन वनं तदा । शुष्कभूरुहमप्यासीत्सपुष्पफलपल्लवम् ॥ १७ ॥
तत्प्रापत्पुष्पपालोऽपि, लोकेनोक्ते विलोकेकः । पश्यति स्म प्रगेऽत्यन्तं, विस्मितो वनसम्पदम् ॥ १८ ॥
विश्वविश्वाद्भुताभङ्गभाग्यसौभाग्यभाजनम् । धन्यश्च दुरितत्रासी, तत्रासीनोऽमुनैक्ष्यत ॥ १९ ॥
गुणवृद्धिकृदाख्यातसिद्धं भासुरविग्रहम् । धन्यं सल्लक्षणं वीक्ष्य, स हृष्टः श्रेष्ठिशाब्दिकः ॥ २० ॥
नूनमस्यानुभावेन, वनं पल्लवितं मम । किं सैन्धवजलोल्लासो, विना कैरवबान्धवम् ॥ २१ ॥
चिन्तयित्वेति चित्तान्तश्चतुरोऽनातुरेण सः । धन्येन सममालापसुखानि क्षणमन्वभूत् ॥२२॥ युग्मम् ॥
ततः स गाढमाग्रह्य, जगृहे स्वगृहेऽमुना । माणिक्यं यत्र तत्रापि, स्वगुणैरर्घमश्नुते ॥ २३ ॥

---

१ कुसुमपालः । २ भविष्यन्त्यां णकच् । ३ श्रेष्ठीति शब्दो वर्णोऽस्येति श्रेष्ठिशाब्दिकः । पक्षे गुणादिका व्याकरणरूढाः संज्ञाः । शाब्दिको वैयाकरणः । ४ चन्द्रम् ।

अभ्यङ्गोद्वर्त्तनस्नानभोजनाङ्गविलेपनैः । श्रेष्ठी सुखासनाद्यैश्चोपचारैरुपचर्य तम् ॥ २४ ॥
जगौ सगौरवं सौम्य!, गुणैस्ते गौरवंशता । ज्ञातैव मे यदाचारः, कुलमाख्याति देहिनाम् ॥ २५ ॥
फलश्रीदायिने तुभ्यं, जीवनस्य वनस्य मे । कुसुमश्रीकनीं दत्त्वाऽऽनृण्यमिच्छामि किञ्चन ॥ २६ ॥
पाणौ कुरु तदेतां मे, तनयां कुसुमश्रियम् । पथ्यां तथ्यामिमां श्रेष्ठिवाचं धन्योऽप्यसमन्यत ॥ २७ ॥
चतुर्भिः कलापकम् ॥
ततो धन्यो धनैर्धाम, लात्वाऽन्यत्तत्र तस्थिवान् । स्थापितोऽप्यादरेण स्वागारे मानधनोऽमुना ॥ २८ ॥
यतः–मित्रस्याऽप्यपरस्यात्र, समीपे स्थितिमावहन् । कलावानपि निःश्रीको, जायते लघुतास्पदम् ॥ २९ ॥
चिन्तारत्नार्पितैर्द्रव्यैर्ववृधे स यथा यथा । तथा तथाश्रितो लोकैः, फलिद्रुम इवाण्डजैः ॥ ३० ॥
अथोद्वाहार्हवस्तूनां, सामग्र्यामल्पकैर्दिनैः । संपन्नायां तिथौ शस्ते, प्राप्ते भूरिमहोत्सवैः ॥ ३१ ॥
शिवः शिवामिवानर्घ्यां, केशवः कमलामिव । श्रेष्ठी दत्तामुपायंस्त, स कन्यां कुसुमश्रियम् ॥ ३२ ॥ युग्मम् ॥
इतो मालवभूपालं, रणोत्तालमबालधीः । आकर्ण्याभ्यर्णमायातं, श्रेणिकोऽभयमैक्षत ॥ ३३ ॥

अभयो निर्भयो भूपं, प्राह साहसधीनिधिः । स्यादुपायत्रयासाध्ये, साध्ये दण्डोऽन्यथा न तु ॥ ३४ ॥
यतः—पुष्पैरपि न योद्धव्यं, किं पुनर्निशितैः शरैः । युद्धे विजयसन्देहः, प्रधानपुरुषक्षयः ॥ ३५ ॥
स्वामिन्! कामितदे भेदे, वैद्येनेव रसायने । मया धिया प्रयुक्तेऽसौ, नङ्क्ष्यत्यामयवत्क्षणात् ॥ ३६ ॥
उपशिल्पेऽथ सैन्यानामावासोर्वीषु सर्वतः । निचखान निधानानि, प्रधानमवनीपतेः ॥ ३७ ॥
पुरं राजगृहं चण्डप्रद्योतस्याथ सैनिकैः । मैनिकैरिव वाप्यम्बु, समीनं पर्यवेष्ट्यत ॥ ३८ ॥
अत्यासन्ने निषण्णेऽरिसैन्ये दौःस्थ्येन सस्वजे । तत्पुरं प्रलयाशङ्कि, मीनस्थित इवार्कजे ॥ ३९ ॥
दम्भात्प्रास्थापयल्लेखं, भम्भासारस्य नन्दनः । चण्डप्रद्योतभूपाय, सर्वोपायप्रवीणधीः ॥ ४० ॥
चिल्लणावच्छिवादेवी, पूज्या मे तद्धितं शृणु । भेदितास्त्वन्नृपाः सर्वे, मत्पित्रा भेदवेदिना ॥ ४१ ॥
दीनारः (रान्) स्वर्णदीनारनिधानेभ्यो हि मत्पिता । दत्तवानात्मसात्कर्तुं, धर्तुं त्वामेष उद्यमः ॥ ४२ ॥
पशुबन्धं च बद्ध्वा त्वामर्पयिष्यन्ति मत्पितुः । तर्पयिष्यन्ति चात्मानं, धनैस्ते ही नृपध्रुवाः ॥ ४३ ॥

१ पुरपरिसरपार्श्वे ।

निखाताः सन्ति दीनारास्तदावासेषु पश्यताम् । दर्पणे कः समीक्षेत पाणिस्थे मणिकङ्कणे ॥ ४४ ॥

अवबुध्येति लेखार्थं, शिवादेवीप्रियोऽप्यथ । राज्ञो निवासमेकस्य, प्रत्ययार्थमचीखनत् ॥ ४५ ॥

दीनारान्वीक्ष्य दीनात्मा, स भयेन पलायितः । हस्त्यश्वाद्याददे तस्य, नश्यतः श्रेणिकोऽपि च ॥४६॥

प्रद्योतोऽप्यविशद्वेगात्, पुरीं स्वामपरे नृपाः । पृष्ठतः कष्टतः प्रापुः, क्ष्मापालं चैवमालपन् ॥ ४७ ॥

मायेयमाभयी नाथ!, राभस्येन किमागमः? । उक्त्वेति शपथैस्तैस्तैः, प्रभुः प्रत्यायितो नृपैः ॥ ४८ ॥

अन्यदान्तःसभं दान्तशात्रवः क्षात्रतेजसा । प्रद्योतः प्राह कोऽप्यस्ति, यो बद्ध्वाऽभयमानयेत्? ॥ ४९ ॥

अशक्यानुष्ठितिं श्रुत्वा, भणितिं भूपतेरिति । अभाषिष्ट सभा सर्वा, गर्वावेशविवर्जिता ॥ ५० ॥

गरुत्मत्पक्षतिच्छेदे, कश्छेकोऽपि हि दक्षधीः? । ऐरावणरदोत्क्षेपविधावाक्षेपवांश्च कः? ॥ ५१ ॥

कश्शेषशेखरासाङ्गिरत्नादानाय यत्नवान्? । कस्सिंहकेसरसटा, अटाट्येत विकर्त्तितुम्? ॥ ५२ ॥

अभयं शास्त्रनिर्धौतनिर्निभप्रतिभाचयम् । आग्रही निग्रहीतुं स्यात्, भूपते! कः सचेतनः?५३त्रिभिर्विशेषकम्

तदाह गणिका काचिद्रूपहृद्दाहहृद्वचः । मामादिश विशामीश!, यथा बद्ध्वा तमानये ॥ ५४ ॥

राजाज्ञया ततो राजगृहं मायामहानिधिः । उपात्तश्राविकावेषा, ययावेषा पणाङ्गना ॥ ५५ ॥
बहिः साथ कृतावासा, पुरान्तश्चैत्यवन्दिका । परिपाट्यागमद्राजकारिते जिनमन्दिरे ॥ ५६ ॥
त्रिकाणां दशकं सत्यापयन्ति सा पणाङ्गना । अर्हतो वन्दते यावत्तावत्तत्राऽभयोऽप्यगात् ॥ ५७ ॥
साधर्मिकीति निर्णीय, मन्त्रिणाथ निमन्त्रिता । सा जगौ धर्मबन्धोऽद्याऽस्माकं तीर्थोपवासिता ॥ ५८ ॥
मन्त्री गुणानुरक्तोऽह्नि, द्वितीये सपरिच्छदाम् । प्रातर्निमन्त्र्य भोज्याद्यैः, प्रीणयामास तां ततः ॥ ५९ ॥
तया निमन्त्रितोऽन्येद्युर्धीसखोऽपि ययावनुः । भोजनान्ते चन्द्रहासमदिरामपि पायितः ॥ ६० ॥
निद्रायमाणः सोऽवन्तीं, प्रापितोऽध्वरथैस्तया । प्रद्योतायार्पितो बद्ध्वा, तेन चैष न्यगद्यत ॥ ६१ ॥
नीतिज्ञोऽपि गृहीतोऽसि, धिग् धिक् ते बुद्धिचातुरीम् । ओतुना भक्ष्यते यद्वा, शुकः सप्ततिकां पठन् ॥ ६२ ॥
अभयोऽप्यब्रवीद्राजन् !, बन्धो धर्मच्छलान्मम । न महिम्नां क्षतेः कर्त्ता, प्रत्युतोद्दीपयत्यमून् ॥ ६३ ॥
कलावानभयः शत्रुगेहेऽपि स्वगुणैरगात् । अत्युच्चसम्पदं चन्द्र, इव शुक्रगृहे स्थितः ॥ ६४ ॥
इतश्च–विश्वासे चनकाकारः, करी सेचनकोऽन्यदा । मदेनाऽवशतां नीतः, श्रेणिकस्य महीपतेः ॥६५॥

पुरश्रीनूपुराणि घ्नन्, गोपुराणि पदे पदे। चूरयन् स्वपदाघातैर्गेहान् देहान् सुखश्रियाम् ॥ ६६ ॥
घट्टयँश्चरणैरट्टान्मरट्टानिव सम्पदाम्। अक्षाणि गेहदेहस्य, गवाक्षान् शुण्डयोत्खनन् ॥ ६७ ॥
अयोभारसहस्रस्य, शृङ्खलान् कमलानिव। त्रोटयन्मोटयँश्चापि क्रीडारामान्मनोरमान् ॥ ६८ ॥
सुभिक्षक्षोणिभृत्कूटान्, धान्यमूटान् स्वलीलया। करेणोल्लालयन् व्योम्नि, बालकः कन्दुकानिव ॥६९॥
रोषादाबालगोपालं, स जनं गमयन्मृतिम्। जनङ्गम इव क्रूरोऽभ्रमत्पुरि मतङ्गजः॥७०॥ पञ्चभिः कुलकम्॥
भूभर्तृनिग्रहोपायास्तत्राथ व्यर्थतामगुः। राजयक्ष्मामये वैद्यप्रतिकारा इवाखिलाः ॥ ७१ ॥
अवन्तीस्थं प्रधानं स्वं, निधानं बुद्धिसम्पदाम्। स्मृत्वा नूनं तदा दूनोऽनूनधीरपि भूधनः ॥ ७२ ॥
ततः करिवरं कोऽपि, यो रङ्क्षोऽपि प्रकोपिनम्। योगी मन इवाध्यात्ममालानस्थानमानयेत् ॥ ७३ ॥
तस्मै सोमश्रियं वक्त्रजितसोमश्रियं सुताम्। ददे लक्ष्मीलतारामान्, ग्रामांश्चापि सहस्रशः ॥ ७४ ॥
एवमुद्घोषणां राज्ञा, कारितां सकले पुरे। श्रुत्वा न्यवारयद्धन्यो, गजमभ्याजगाम च ७५ त्रिभिर्विशेषकम्
धन्यः परिकरं बद्ध्वा, क्षणं शीर्षे क्षणं पुरः। क्षणं पार्श्वे क्षणं पश्चात्स्थित्वा गजमखेदयत् ॥ ७६ ॥

अवक्रश्चक्रवत् शीघ्रं, भ्रमयन् स स्वयं भ्रमात् । निर्मदं सामजं चक्रे, गजशिक्षाविचक्षणः ॥ ७७ ॥
मर्मण्याहत्य पादेनोत्प्लुत्य चारूढवानमुम् । सोऽङ्कुशेन गजं निन्ये, तदालानमनाकुलः ॥ ७८ ॥
तत्कलारञ्जितस्तस्मै, सुतां सोमश्रियं नृपः । सहस्रं च ददौ ग्रामान्, महोत्सवमनोरमम् ॥ ७९ ॥
वनपल्लवनोद्भूता, ववृधे हस्तिबन्धनात् । कीर्तिर्धन्यस्य भूभृद्भूर्नदीवाम्बुदवर्षणात् ॥ ८० ॥
इतश्चात्रैव देशेऽभूद्धनधान्यसमृद्धिमान् । शालिग्राम इति ग्राम, इन्द्रियग्रामशर्मदः ॥ ८१ ॥
तत्र धन्याभिधा कापि, कापिलीयप्रणीतिवत् । सत्कार्यकारिणी भद्रप्रकृतिः स्थविराऽभवत् ॥ ८२ ॥
नाम्ना सङ्गम इत्यासीद्रौद्रदारिद्र्यसङ्गमः । सुमुख्यास्तनयोऽमुष्याः, प्राञ्जलः प्रणयोज्ज्वलः ॥ ८३ ॥
स चारयन् सदा पौरगोरूपाण्येकदैक्षत । परमान्नं महे कापि, महेभ्यानां गृहे गृहे ॥ ८४ ॥
ययाचेऽथ गृहं गत्वा, नत्वा स स्थविरामिति । पायसं सघृतं मातर्देहि मे हितकारिणि! ॥ ८५ ॥
एकस्यापि सुतस्यासौ, पायसस्य मनोरथम् । नालं पूरयितुं निःस्वा, रोदिति स्म ततो भृशम् ॥ ८६ ॥
श्रुत्वा तत्प्रातिवेश्मिक्यो, ददति स्म दयालवः । तण्डुलाद्यखिलं सापि, पायसं प्रगुणं व्यधात् ॥ ८७ ॥

परिवेष्य च पुत्राय, सा तद्दृग्दोषशङ्कया । अन्यत्रागाद्यतोऽनिष्टाशङ्कि स्याज्जननीमनः ॥ ८८ ॥

तावदेको मुनिस्तत्र, मासक्षपणपारणे । सङ्गमस्य गृहेऽगण्यैः, पुण्यैर्नुन्न इवागमत् ॥ ८९ ॥

गोपालेनापि बालेन, विवेकच्छेकचेतसा । पायसं कायसंप्रीत्यै, मुनये भावतो ददे ॥ ९० ॥

क्षणादागतया मात्रा, मात्राधिकमुदा पुनः । पर्यवेष्यत पुत्राय, तदनेनाप्यभुज्यत ॥ ९१ ॥

बलिष्ठभोजनाद्बालः, स विसूचिकया मृतः । स्वकृतं सुकृतं पात्रदानं ध्यायन् मुहुर्मुदा ॥ ९२ ॥

मगधाधिपते राजधान्यां राजगृहेऽथ सः । दानपुण्यमहिम्नाऽभूद्, भद्रागोभद्रयोः सुतः ॥ ९३ ॥

फलितं जननी स्वप्ने, शालेयं यद्व्यलोकत । गर्भगेऽस्मिन्नतः शालिरशालि स्वजनैरसौ ॥ ९४ ॥

क्रमाद्यौवनमापन्नः, स कन्याः परिणायितः । पित्रा द्वात्रिंशतं नित्यमातिष्ठत्सुखलीलया ॥ ९५ ॥

तावत्सर्वधियां धाम्ना, रहितेऽभयमन्त्रिणा । पुरेऽत्रावसरं ज्ञात्वा, कश्चिन्नैगमवेषभृत् ॥ ९६ ॥

एकाक्ष एकदा धूर्त्तो, मूर्तो दम्भ इवागतः । गोभद्रश्रेष्ठिनं प्राह, साहसी धनदं धनैः ॥९७॥ युग्मम्

भद्र ! स्मरसि गोभद्र ! चम्पायामागमिष्यसि । तत्र सांयात्रिकाद् भूरि, भूरि व्यवहरिष्यसि ॥ ९८ ॥

आदास्येऽहं च दास्येन, तदा सीदन् कुसीदतः । द्रव्यलक्षं तवोपान्ते, चक्षुर्ग्रहणकार्पणात् ॥ ९९ ॥

साकाङ्क्षवाक्यतो युग्मम् ॥

व्यवसायान्विधायाहं, बहुद्रव्यमवाप्नवम् । संप्रत्यत्र ततः प्रापमादानाय स्वचक्षुषः ॥ १०० ॥

द्रव्यलक्षमिदं वृद्धियुतं भद्र ! गृहाण तत् । विरोचनसमज्योतिर्लोचनं मे तथाऽर्पय ॥ १०१ ॥

वदन्नेवं वचो वाचोयुक्तिज्ञेन मृदूक्तिभिः । तेन प्रज्ञापितोऽप्युच्चैरित्याख्यद् व्यंसकोऽसकौ ॥ १०२ ॥

बह्वीभिर्धनकोटीभिर्दुर्लभे मम लोचने । मा लुभत् क्षुभ्यदभ्याभलोभोऽप्यत्रभवान् भवान् ॥ १०३ ॥

सारं ग्रहणकं दृष्ट्वा, चेत्त्वयाऽप्यपलप्यते । ही शुद्धव्यवहारस्य, तदा जातो जलाञ्जलिः ॥ १०४ ॥

तमोऽन्तकस्तमः कुर्यात्, चेच्छुर्यात्कस्तदा पुनः। विषवृष्टिः सुधांशोश्चेद्, भूयात्तुष्टिस्तदा कुतः? ॥१०५॥

एवं निशम्य गोभद्रः, किंकर्त्तव्यतया जडः । महेभ्यान् प्रेरयामास, धूर्त्तप्रज्ञापनाकृते ॥ १०६ ॥

---

१ 'अयदि स्मृत्यर्थे भविष्यन्ती' अनेन भूते भविष्यन्ती । २ वृद्ध्या ।

उपायाः सामदानाद्याः, प्रयुक्ता व्यवहारिभिः । अस्मिन् सर्वेऽभवन् व्यर्था, विद्युदग्नाविवाम्बुदाः ॥१०७॥
धूर्त्तौ भूपसभं प्रापत्, प्रसभं कलहावहः । नालं छेत्तुं भवन्ति स्म, तं कलिं सचिवादयः ॥ १०८ ॥
गोभद्रधूर्त्तयोर्वादमच्छिन्नं मन्त्रिभिस्तदा । वीक्ष्याऽभयकुमारस्य, स्मरन् राजेत्यभाषत ॥ १०९ ॥
अत्र चेदभयो मन्त्री, स्यादेवं न तदा कलिः । द्योतते सविता यत्र, न तत्र ध्वान्तसन्ततिः ॥ ११० ॥
अभयेन विना पर्षन्न मे हर्षप्रदायिनी । ननु चन्द्रमसा युक्ता, निशा न स्यात्तमोमयी ॥ १११ ॥

त्रिभिर्विशेषकम् ॥

गोभद्रः स्वसुतां दत्ते, विवादच्छेदकारिणे । एवं भूपतिनाऽवादि, पटहो नगरे ततः ॥ ११२ ॥
दम्भान्धतमसध्वंसहंसः पस्पर्श डिण्डिमम् । सतां मान्यस्तदा धन्यः, सभामाप च भूपतेः ॥ ११३ ॥
एवमेवं त्वया वाच्यमिति प्रच्छन्नमन्वशात् । स गोभद्रं कथारम्भे, गुरुः स्वान्तिषदं यथा ॥ ११४ ॥
समक्षं सर्वसभ्यानां, महेभ्यानां नृपस्य च । सार्थवाहस्ततः प्राह, धूर्त्तं वादप्रशान्तये ॥ ११५ ॥

---

१ स्मृत्यर्थदयेशः इति वैकल्पिके व्याप्यत्वे पक्षे शेषत्वेन षष्ठी ।

भविष्यति महाभाग!, चक्षुस्ते मम वेश्मनि । मुक्तं ग्रहणकस्थाने, त्वया हि न मृषोच्यते ॥ ११६ ॥
परं ज्योतिर्जुषः सन्ति, मञ्जूषासु गृहे पुरा । सहस्रशो दृशो लोकैर्मुक्ता ग्रहणके मम ॥ ११७ ॥
पृथिव्यां हि पुरं सारं, पुरे गेहं गृहे धनम् । धनेऽपि कायः कायेऽपि, वक्त्रं वक्त्रेऽपि चक्षुषी ॥ ११८ ॥
सर्वसारतया तस्माद्दृश एव नृणां सदा । लात्वा ग्रहणकस्थाने, प्रायो वृद्ध्या धनं ददे ॥ ११९ ॥
तद् द्वितीयं भवांश्चक्षुर्ममार्पयतु सम्प्रति । तत्सादृश्यादभिज्ञाय, यथा ते दृशमानये ॥ १२० ॥
फालाद् भ्रष्टो हरिर्दावाच्च्युतो वा द्यूतकृद्यथा । धूर्त्तस्तथा विलक्षोऽभूत्स्वचक्षुर्दातुमक्षमः ॥ १२१ ॥
धन्यस्यैवं धिया तेन, पटीयस्या प्रयुक्तया । कपटी प्रकटीभूतो, राज्ञा निर्धाटितः पुरात् ॥ १२२ ॥
श्रेष्ठी तां विपदं तीर्णो, दिदीपेऽथाधिकं श्रिया । राहुदंष्ट्राविनिर्मुक्त, इव कैरवबान्धवः ॥ १२३ ॥
तच्छ्रुत्वाथ प्रियसखी, सोमश्रीकुसुमश्रियोः । भद्रागोभद्रसूः कन्या—नन्यसाधारणा गुणैः ॥ १२४ ॥
विनिद्राक्षी सुभद्राख्या, कलासौभाग्यशालिने । धन्याय स्वप्रदानोत्कान्, स्वजनानभ्यनन्दयत् ॥१२५॥
युगलम् ॥

गोभद्रेणाथ तां दत्तामुत्सवैर्धनसारसूः । गुणश्रीतीमुपायंस्त, जानकीमिव राघवः ॥ १२६ ॥
धन्यः प्राप परां प्रौढिं, प्रियाभिस्तिसृभिर्युतः । उत्साहप्रभुतामन्त्र–शक्तिभिर्भूमिमानिव ॥ १२७ ॥
ततो गोभद्रसार्थेशः, श्रीमत्तीर्थेशसंनिधौ । शुद्धं चारित्रमाराध्य, स्वर्गलोके सुरोऽजनि ॥ १२८ ॥
स पुत्रप्रेमपुण्याभ्यामाकृष्टः प्रतिवासरम् । आगत्य शालिभद्राय, दिव्यान् भोगान् प्रदत्तवान् ॥ १२९ ॥

यस्याज्ञयैव पितृदेवतयापि दत्तैः, श्रीशालिभद्र इह दिव्यसुखैरखेलत् ।
विस्तारितेऽवृजिनकीर्त्तिनि भावदाने, तत्रादरं कुरु विदांवर ! निर्निदाने ॥ १३० ॥

इति श्रीतपागच्छेशपरमगुरुश्रीसोमसुन्दरसूरिशिष्यश्रीजिनकीर्त्तिसूरिप्रणीते श्रीधन्यचरित्रशालिनि
श्रीदानकल्पद्रुमे कन्यात्रयपरिणयो नाम पञ्चमः पल्लवः ॥ ५ ॥

---

## अथ षष्ठः पल्लवः

अथास्मिन् श्रीवधूकेलिगृहे राजगृहेऽन्यदा । लीलया विलसन् सप्तभूमसौधाग्रभूमिषु ॥ १ ॥
पितरौ सोदरांश्चापि, दीनं बम्भ्रमतः सतः । धन्यो वन्योचिताकल्पान्, रङ्ककल्पान् व्यलोकत ॥२॥ युग्मम्॥
उपांशु भृत्यैराकार्य, विनयेन प्रणम्य च । पप्रच्छ स्वच्छचित्तोऽसौ, पितरं रचिताञ्जलिः ॥ ३ ॥
लक्ष्मीवतां कथं तात!, निःस्वता वः समागता? । नहि च्छायाजुषां तापव्यापज्जात्वपि जायते ॥ ४ ॥
सोऽवग् वत्स! त्वया सार्धं, गता श्रीरपि गेहतः । जीवेनैव समं यद्वा, चेतना याति देहतः ॥ ५ ॥
चौरावस्कन्दवह्न्याद्यैः, सापि संपत्त्वदर्पिता । क्षयं नीता प्रभूतापि, वातैरिव घनावली ॥ ६ ॥
स्वच्छात्मा स निशम्येति, तद्दुःखप्रातिबिम्बतः । चित्ते सुखोज्झितो जज्ञे, स्वभावो हि सतामसौ ॥७॥
वेषाडम्बरहीनानामवज्ञा महतामपि । महेशोऽप्यर्धचन्द्रः किं, कृत्तिवाससि नाभवत्? ॥ ८ ॥
तदेते लघुतां माऽऽपन्, महेभ्येष्वधना इति । धन्यो वस्त्ररथाश्वादि, दत्त्वा प्रेष्य च तान् बहिः ॥ ९ ॥

---

१ वेषो नेपथ्यमाकल्पः । इति हैमः ।

ानक०

१३ ॥

प्रावीविशत् पुरे पौरसहितो विहितोत्सवः । औचित्यं नहि कृत्येषु, चतुरः परिमुञ्चति ॥ १० ॥

रमाभिरामान् स्वग्रामान्, बान्धवेभ्यः स दत्तवान् । बन्धुभोग्या हि या लक्ष्मीः, सैव श्लाघ्या मनस्विनाम् ॥
सत्कृता अपि धन्येन, धनाद्यैरग्रजा निजाः । अमर्षमेव ते हर्षस्थानेऽदधत दुर्धियः ॥ १२ ॥
त्रिभिर्विशेषकम् ॥

खलः सत्क्रियमाणोऽपि, ददाति कलहं सताम् । दुग्धधौतोऽपि किं याति, वायसः कलहंसताम् ? ॥१३॥
धन्योऽथामर्षवाक्शुष्यत्ताल्वनाल्वनसौहृदान् । कृपाल्वत्तस ईर्ष्याल्वन्, वीक्ष्य बन्धून् व्यचिन्तयत् ॥ १४ ॥
ईर्ष्यामलीमसानि स्युर्मानसानि यथा भृशम् । बन्धूनां संपदप्येषा, विपदेव मता सताम् ॥ १५ ॥
तदिमां संपदं सर्वां, त्यक्त्वा देशान्तरे पुनः । यामि कामितसंप्राप्त्या, तुष्टाः सन्तु सहोदराः ॥ १६ ॥
ध्यात्वेति स प्रियास्तिस्त्रो, मुक्त्वा चिन्तामणीसखः । अननुज्ञाप्य राजादीनदीनो निर्ययौ पुरात् ॥१७॥
सञ्जाताभीष्टसंपत्तिश्चिन्तारत्नानुभावतः । स सत्तेभवनेऽप्याप, सुखं स्वभवने यथा ॥ १८ ॥
स व्यतीत्य बहून् ग्रामानार्यस्तिर्यग्भवानिव । मनुष्यगतिवत् प्राप, कौशाम्बीं पुण्यवान् पुरीम् ॥ १९ ॥

॥ ३

तत्र क्षत्रशिरोरत्नं, शतानीकोऽभवन्नृपः । यस्यासिर्द्वेषिवर्गश्च, समं निष्कोशतां गतौ ॥ २० ॥
आसीत्कोशे मणिस्तस्य, सहस्रकिरणाह्वयः । कुलदैवतवत्पूज्यः, पूर्वजैः सर्वदापि हि ॥ २१ ॥
तद्गुणान् भूभुजा रत्नपरीक्षाविदुरा नराः । पृष्टा न चाऽभ्यधुः केऽपि, पुलिन्दा इव पूर्गुणान् ॥ २२ ॥
अमुष्य मणिमुख्यस्य, यो गुणान् निपुणाग्रणीः । प्रत्यक्षप्रत्ययान् सम्यग्, बभ्भणीत्यनणीयसः ॥ २३ ॥
तस्मै ग्रामगजाश्वानां, पञ्च पञ्च शतान् ददे । सत्यप्रतिज्ञः सौभाग्यमञ्जरीं च स्वपुत्रिकाम् ॥ २४ ॥
इति क्षितिपतिः पुर्यां, पटहं प्रतिचत्वरम् । परीक्षकोपलम्भाय, ससंरम्भमवादयत् ॥ २५ ॥
त्रिभिर्विशेषकम् ॥
डिण्डिमं चण्डनिर्घोषं, निवार्य धनसारसूः । अधिभूपसभं प्राप, परीक्षकशिरोमणिः ॥ २६ ॥
धन्यं वत्सपतिः प्राह, वत्स ! रत्नपरीक्षणम् । विधेहि तद्गुणान् स्पष्टमभिधेहि च धीनिधे ! ॥ २७ ॥
धन्येनापि मणिं वीक्ष्य, भणितं भूपते ! शृणु । सप्रत्ययं भणाम्यस्य, प्रभावं चित्तचित्रदम् ॥ २८ ॥
एष यच्छेखरोत्सङ्गसङ्गमङ्गति भूपते ! । तं द्विपा इव पारीन्द्रं, हन्तुं शक्ता न विद्विषः ॥ २९ ॥

अस्मिन् सति पुरस्यान्तरातिवृष्टिपुरस्सराः । अनीतय इव क्ष्मापे, न स्युः सर्वा अपीतयः ॥ ३० ॥

एतद्युजि भुजे न स्युः, कदापि प्रोन्मदा गदाः । अम्बुवाहाश्रिते दावहव्यवाहा इवाचले ॥ ३१ ॥

पराभवन्ति भूपाद्या, न कदाप्येतदाश्रितम् । अर्काङ्कपालीमालीनमन्धकारा इवाङ्गिनम् ॥ ३२ ॥

यदि न प्रत्ययः स्वामिन्!, स्थालमानाय्यतां तदा । शालिभिः पूरितं क्रूरभक्षिणश्चापि पक्षिणः ॥३३॥

स्थाले शालिकणैः पूर्णे, समानीतेऽथ वेत्रिणा । स्थापयित्वा मणिं धन्यः, क्ष्मापतेः पक्षिणोऽमुचत् ३४

अभ्रमन्नभितः स्थालं, नालं स्प्रष्टुं खगाः परम् । परितो द्वीपमुल्लोलाः, कल्लोला इव वारिधेः॥ ३५ ॥

मणावपाकृते ते तु, कणानादन् क्षणादपि । आरामे रक्षकत्यक्ते, फलौघानिव मर्कटाः ॥ ३६॥

धन्यः प्राह यथानेन, पक्षिभ्यो रक्षिताः कणाः। वैरी१ति२गद३भूतेभ्यो४, रक्ष्यन्ते मनुजास्तथा ॥३७॥

निशम्येति महीनाथः, प्रत्यक्षं प्रेक्ष्य चाद्भुतम् । मणेः प्रभावं धन्यस्य, कौशलं च चमत्कृतः ॥ ३८ ॥

सौभाग्यमञ्जरीं कन्यां, धन्यायादत्त भूपतिः । ग्रामानश्वान् गजेन्द्राँश्च, पञ्च पञ्च शतप्रमान् ॥ ३९ ॥

बहिर्निवेश्य कौशाम्ब्या, धन्यः स्वाभिधया पुरम्। कारिते तत्र सौधेऽसौ, न्यवात्सीत्सौख्यलीलया ॥४०॥

प्रभुत्वेऽथाऽनपायेऽपि, सोपायव्यवसायवित् । उपार्जत् सोऽल्पकालेन, स्वर्णकोटीरनेकशः ॥ ४१ ॥
दुष्प्रापमम्बु लोकानामालोक्य नगरेऽन्यदा । सरः खानयितुं तेन, प्रारेभेऽथ शुभेऽहनि ॥ ४२ ॥
इतः श्रेष्ठिगृहाद्धन्ये, गते श्रीरप्यगात्तदा । भास्वति प्रोषिते विश्वाद्दिनलक्ष्मीरिवाखिला ॥ ४३ ॥
अमात्रां मम जामात्रा, प्रौढिं नीताः सदाप्यमी । खला अकलहायन्त, भूपस्तानित्यदण्डयत् ॥ ४४ ॥
उज्झिता धनसाराद्या, धनैरेव न केवलम् । स्पर्द्धेनेव तदनुगैर्यशःकान्तिगुणैरपि ॥ ४५ ॥
निर्धनत्वादसारोऽथ, धनसारो व्यचिन्तयत् । कथं प्रागुच्चवाणिज्यस्तन्नीचमधुनाश्रये? ॥ ४६ ॥
ततोऽसौ न्यगदत् पुत्रान्, प्रवसामः स्ववृत्तये । द्राक्षासदक्षामाहुर्यद्भिक्षामप्यन्यनीवृति[1] ॥ ४७ ॥
सुविद्योऽपि सुरूपोऽपि, नार्थमर्घति निर्धनः । स्वक्षरोऽपि सुवृत्तोऽपि, द्रम्मः कूटो यथा जने ॥ ४८ ॥
सुताः! सुतारवेषोऽपि, कोऽपि श्लाघ्यो न निर्धनः । वराक्षरमपि श्राव्यं, काव्यं यन्नार्थवर्जितम् ॥ ४९ ॥
एवमुक्त्वाऽमुनाऽन्यत्र, निर्वाहाय यियासुना । प्राहेषातां पितुर्गेहे, सोमश्रीकुसुमश्रियौ ॥ ५० ॥

---

१ देशे ।

जगाद सादरं चैष, सुभद्रां साश्रुलोचनः । गोभद्रस्य गृहे यातु, भवत्यपि शुभाशये ! ॥ ५१ ॥
साह शीलसहायाहं, सहायास्यामि सम्प्रति । आपद्यपि सतीनां यद्भर्त्तुरेव गृहं गतिः ॥ ५२ ॥
नारीणां पितुरावासे, नराणां श्वशुरालये । एकस्थाने यतीनां च, वासो न श्रेयसे भवेत् ॥ ५३ ॥
यदा सौख्यं यदा लक्ष्मीस्तदाप्युद्दिश्य कारणम् । गम्यं पितुर्गृहे स्त्रीभिर्दोष एवान्यथा पुनः ॥ ५४ ॥
अत्र वासे प्रवासे वा, सम्पद्यापदि वाऽप्यहम् । कायं छायेव नो मोक्ष्ये, सुशीला श्वशुरालयम् ॥ ५५ ॥
हृष्टः श्रेष्ठी तदाचष्ट, वधु ! साधु त्वयोदितम् । नरोत्तमस्य यत्सत्यं, तस्य धन्यस्य पत्न्यसि ॥ ५६ ॥
ततस्तया स्वपत्न्या च, सभार्यैस्तनयैर्युतः । निर्ययौ स पुराज्जीव, इव कर्मभिरष्टभिः ॥ ५७ ॥
भ्रान्त्वा देशान् बहून् प्राप, स कौशाम्बीं पुरीं क्रमात् । यतयो याचका निःस्वाः, पवना इव न स्थिराः ॥
तत्रासौ कञ्चिदप्राक्षीद्धनिनोऽल्पधनास्तथा । निर्धनाश्च कथं भद्र ! वर्त्तन्तेऽत्र पुरे जनाः ॥ ५९ ॥
स प्राह धनवन्तोऽत्र, स्वनीव्या व्यवसायिनः । अपेक्षन्ते प्रकाशाय, दीपा दीपान्तरं नहि ॥ ६० ॥
नाणकावर्त्तिनः काणापणिका घृतहट्टिकाः । स्वर्णकारा मणीकाराः, सौत्रिकाः पादसूत्रिकाः ॥ ६१ ॥

ताम्बूलिकास्तथा पौगफलिकाः पाट्टकूलिकाः । कार्पासिका दौष्यिकाश्च, माणिक्यव्यवसायिनः ॥ ६२ ॥
सौवर्णिका गान्धिकाद्या, ये चान्ये नातिवैभवाः । सर्वे धन्यमहेभ्यस्य, ते वणिक्पुत्रतान्विताः ॥ ६३ ॥
धनं समुपजीव्याऽत्र, निर्वहन्ते यथासुखम् । तटारघट्टास्तटिनीप्रवाहस्य यथा जलम् ॥ ६४ ॥
चतुर्भिः कलापकम् ॥

येऽत्यन्तनिर्धनास्ते तु, श्रेष्ठिनोऽस्य महासरः । वेतनेन खनन्त्यत्र, स्वदारिद्र्यमिवाधुना ॥ ६५ ॥
श्रेष्ठी दत्तेऽत्र दीनारमेकं स्त्रीणामुभौ नृणाम् । द्विर्भोजनं च सर्वेषां, तैलान्नादि यथेप्सितम् ॥ ६६ ॥
दृष्ट्वा स्वाजीविकोपायं, ततः श्रुत्वा जहर्ष सः । देवमातृकदेशस्थजनोऽम्भोदमिवोन्नतम् ॥ ६७ ॥
धनसारादयश्चख्नुर्वेतनेनाथ तत्सरः । जीवाः किं किं न कुर्वन्ति, दुष्पूरोदरपूर्त्तये? ॥ ६८ ॥
अन्यदा सस्मदापूर्णैस्तूर्णप्राप्तैर्जनैर्वृतम् । मन्त्रिसामन्तपादातहास्तिकावर्तसंयुतम् ॥ ६९ ॥
सहर्षमागधश्रेणीप्रणीतगुणवर्णनम् । धृतसौवर्णदण्डोच्चमायूरातपवारणम् ॥ ७० ॥
उत्तप्तस्वर्णगौराङ्गं, रत्नालङ्कारभासुरम् । ज्वलद्दिव्यौषधिज्योतिर्जालं स्वर्णाचलं किल ॥ ७१ ॥

जय ! जीव ! चिरं नन्देत्यादिवादिषु बन्दिषु । यावज्जीवोपभोगार्हं, ददतं धनसञ्चयम् ॥ ७२ ॥
सरोवरोऽवलोकाय, कौतुकायतलोचनम् । धन्यं तत्रागतं सर्वे, नेमुः कर्मकरा मुदा ॥ ७३ ॥

पञ्चभिः कुलकम् ॥

भृत्यवृत्त्याथ दृष्ट्वासौ, क्लिश्यन्निजकुटुम्बकम् । दध्यावहो अनुलङ्घ्या, कर्मरेखा सुरैरपि ॥ ७४ ॥
पितरौ भ्रातरो भ्रातुर्जाया जाया ममापि च । प्राप्यन्त हन्त दैवेन, दुर्दशां कीदृशीमहो ! ॥ ७५ ॥
शालिभद्रस्वसाप्येषा, कथं वहति मृत्तिकाम् ? । हरिश्चन्द्रोऽपि किंवाम्बु, न चाण्डालगृहेऽवहत् ? ॥७६॥
समयं गमयामास, दमयन्त्यपि दुःखिनी । एकाकिनी वने घोरे, को रे वक्रे विधौ सुखी ? ॥ ७७ ॥
नृपतेर्मुकुटाद्भ्रष्टं, रजसा छादितं भुवि । जनांह्रिघट्टनां रत्नमपि हन्त सहत्यहो ! ॥ ७८ ॥
ध्यात्वेति पितरं प्राह, के यूयं ? कुत आगताः ? । सोऽपि गोपितवंशादि, ददौ यत् किञ्चिदुत्तरम् ॥७९॥
दध्यौ धन्योऽधुना ऋद्धं, नाभिजानन्ति माममी । स्वापत्यमपि धौरेयं, सञ्जातं पशवो यथा ॥ ८० ॥
अगोपयन् स्ववंशाद्यमधुना निर्धना अमी । दर्शयेयुः किमश्रीकास्ताराः स्वं यदि वा दिवा ? ॥ ८१ ॥

समये ज्ञापयिष्यामि, ततः स्वमपि नाधुना । अकाले स्याद्विकाराय, यत्पथ्यमपि रोगिणाम् ॥ ८२ ॥
वृद्धानां दुस्सहं तैलं, भोज्ये देयं ततो घृतम् । सर्वभृत्येभ्य इत्येष, स्वमादिक्षन्नियोगिनम् ॥ ८३ ॥
भृत्यान् वृक्षानिवोल्लास्य, घृतदापनजै रसैः । यथागतं जगामैष, धाराधर इवोन्नतः ॥ ८४ ॥
द्वितीयेपि दिने तत्र, स तान् सत्कर्तुमागतः । वृक्षान् सपल्लवीकर्त्तुं, वसन्त इव कानने ॥ ८५ ॥
मनोऽनुकूलताम्बूल—दुकूलादिप्रदानतः । सच्चक्रे कर्मकृद्वर्गं, पित्रादींश्च विशिष्य सः ॥ ८६ ॥
स प्राह स्थाविरं तक्रा—भावे वः स्यान्निशान्धता । वासरापगमे चक्र—वाकाणामिव पक्षिणाम् ॥ ८७ ॥
तद्ग्राह्यं मद्गृहात्तक्रं, युष्माभिर्वृद्ध ! सर्वदा । महतामपि यत्तस्य, याचने स्यान्न लाघवम् ॥ ८८ ॥
नित्यं तक्रार्थमायान्तु, तव वध्वो मदालये । ज्ञेयं मद्गृहमात्मीय—मेव गण्यं नचान्तरम् ॥ ८९ ॥
महान् प्रसाद इत्यूचे, श्रेष्ठिना पटुचाटुना । धिगबोधं क्षुधं नैःस्व्यं, परायत्तां च जीविकाम् ॥ ९० ॥
यतः—क्षीणो मृगयतेऽन्येषा—मौचित्यं सुमहानपि । द्वितीयाभूः प्रजादत्त—तन्त्वन्वेषी यथा शशी ॥ ९१ ॥
संप्रीण्य स तथा भृत्यान्, पित्रादींश्च विशेषतः । दैवदुर्ललितं निन्द—न्नावासं निजमासदत् ॥ ९२ ॥

धनसारं जगुर्भृत्या, अहो वः संनिधेर्वयम् । अभूम सुखिनः सर्वे, सत्सङ्गः श्रेयसे यतः ॥ ९३ ॥
अथ क्रमाद्ययुर्धन्य-सौधे श्रेष्ठिवधूटिकाः । तक्रस्य जीवनस्यार्थे, कादम्बिन्य इवाम्बुधौ ॥ ९४ ॥
धन्याज्ञया ददौ ताभ्यस्तक्रं सौभाग्यमञ्जरी । सौभाग्यमञ्जरी सैव, स्त्रीणां यद्भर्तृवश्यता ॥ ९५ ॥
सोऽशिषच्च प्रियामेवं, तिसृभ्यस्तक्रमेव भोः । ज्यायसीभ्यस्त्वया देयं, स्वच्छं सज्जनचित्तवत् ॥ ९६ ॥
दधिदुग्धादिकं दद्याः, कनीयस्यै पुनः प्रिये ! । प्रियालापादिभिर्वर्या, कुर्याश्च प्रीतिमेतया ॥ ९७ ॥
विधाय दयितादेशं, शिरःशिखरशेखरम् । अवक्रेण हृदा चक्रे, सर्वदैव तथैव सा ॥ ९८ ॥
प्रददे च प्रमोदेन, कनीयस्यै पुनः स्त्रिये । द्राक्षाकरम्भपक्वान्न-दधिदुग्धसितादिकम् ॥ ९९ ॥
तद्वीक्ष्याश्लाघत श्रेष्ठी, सुभद्रां ननु पश्यत । सूनोर्भाग्यवतः पत्य-प्येषा भाग्यवती सती ॥ १०० ॥
समत्सराः पराः प्राहु-र्व्याख्यातो देवरः पुरा । तत्याज चपलो देश-मप्यहो! भाग्यशालिता ॥ १०१॥
दिवा मृदं वहत्येषा, रजन्यां स्वपिति क्षितौ। सुदुःखिनी खरीवाहो!, भृशं भाग्यवतीतरा ॥१०२ युग्मम्॥
अन्यदा वन्यदावाग्नि-ध्यामिताम्रलतानिभाम्। निःश्रीकां तां शतानीका-ङ्गजा प्राह गृहागताम् ॥१०३॥

सख्याख्याहि निजाख्यादि, मत्प्रीत्यै विमलाशये!। स्वान्तस्थं गोपयेयुः किं, वस्तु स्फटिकभित्तयः? १०४

लज्जयाऽधोमुखी साऽपि, बभाषे सुमुखी सखि!। किं मां पृच्छसि? दुःखार्त्ता, पृच्छ दुर्दैवमेव मे॥१०५

शालिभद्रस्य तस्याहं, भगिनी भाग्यशालिनः। भोगी न गीयते कोऽपि, यतोऽन्यास्त्रिजगत्यपि॥ १०६॥

गोभद्रस्य सुता तस्य, भद्राकुक्षिसमुद्भवा। यत्समः कोऽपि नास्त्येव, पिता पुत्रैकवत्सलः॥ १०७॥

त्वद्भर्तृसमनाम्ना च, धाम्ना सद्भाग्यसंपदाम्। व्यवहारिसुतेनोढा, लक्ष्मीरिव मुरारिणा॥ १०८॥

कलिना मलिनाचारान्, विलोक्य निजबान्धवान्। स मां समां रमां चापि, परित्यज्य ययौ क्वचित्॥१०९॥

गते तस्मिन् गता लक्ष्मीरनन्यगतिका सती। नीराभावे तडागान्तस्तिष्ठेदम्बुजिनी किमु?॥ ११०॥

स्वनिर्वाहकृतेऽत्रैत्य, खन्यते तत्सरः सखि!। विराद्धाः किं न जल्पन्ति?, किं न कुर्वन्ति निर्धनाः?॥१११

अथाजगाम धन्योऽपि, गोपितस्वाकृतिर्मनाक्। गोभद्रतनयामेवं, सव्याजं व्याजहार च॥ ११२॥

प्राणाधीशं विना प्राणान्, कथं धरसि? भामिनि!। पयः शोषे हि कृष्णोर्वी, विदीर्येत सहस्रधा ११३

साह मे जीवितं रक्षत्याशाबन्धो निपाततः। अपि शुष्कं पुष्पवृन्दं, वृन्तपाश इव स्थिरः॥ ११४॥

धन्योऽप्यधान्मुधा मुग्धे!, किं नाशयसि? यौवनम्। अभुक्त्वा नहि ताम्बूलं, करस्थं शोषयेद्बुधः ॥११५

दूरदेशगतस्याशा, तस्य सुभ्रु! विमुच्यताम्। मां प्रपद्य पतिं भोगा, भुज्यतामिह दुर्लभाः ॥ ११६ ॥

आकर्ण्य तद्वचः सापि, वज्रपातसहोदरम्। कर्णौ पिधाय पाणिभ्यां, भयभीतेत्यभाषत ॥ ११७ ॥

गतियुगलकमेवोन्मत्त! पुष्पोत्कराणाम्, हरशिरसि निवासः क्ष्मातले वा निपातः।
विमलकुलभवानामङ्गनानां शरीरं, पतिकरकरजो वा सेवते वा हुताशः ॥ ११८ ॥

नाम्ना धन्योऽप्यधन्योऽसि, यस्त्वमुन्मार्गमागमः। वक्रगो मङ्गलोऽप्युर्व्यां, स्यादमङ्गल एव यत् ॥ ११९

परयोषाभिलाषेण, नूनं भ्रश्यसि वैभवात्। को वा फणिमणीग्राह–काम्यया सुखितो भवेत्? ॥ १२० ॥

मच्छीललोपे यत्रेन्द्रो, नेष्टे तत्र भवाँस्तु कः?। और्वे[1] यत्राम्बुधिर्मग्नः, प्रोन्मदस्तत्र किं नदः? ॥१२१॥

॥ पञ्चभिः कुलकम् ॥

चेतनाया इवैतस्याः, स दृष्ट्वेति विशुद्धताम्। अनिर्वाच्यं परात्मेवा–मन्दानन्दमविन्दत ॥ १२२ ॥

---

१ वडवानले।

सुधासुधाकरीं वाचं, सुभद्रां प्रति सोऽभ्यधात्। परस्त्रीलोलुभो नाहं, न भेतव्यं ततस्त्वया ॥ १२३ ॥
इदं वचनमात्रेण, तव सत्त्वं परीक्षितम्। विरुद्धं यन्मयाऽवाचि, तत्क्षन्तव्यं त्वया पुनः ॥ १२४ ॥
परं पृच्छामि भर्त्तारं, त्वं कथं वेत्सि? सुन्दरि!। लोचनालोकमात्राद्वा, सङ्केताद्वा कुतश्चन ॥ १२५ ॥
सा प्राह यो हि सङ्केतान्, स्वनिकेतगतान् स्फुटान्। अज्ञातानपरैर्वक्ति, स भर्ता मे न संशयः ॥ १२६ ॥
सोऽथावादीत् प्रतिष्ठान–नगराञ्चनसारसूः। धन्यो बन्धुकलेर्भग्नो, लग्नो देशान्तरं प्रति ॥ १२७ ॥
प्राप राजगृहं तत्र, कन्यात्रयमुपायत। वाणिज्योपायतः स्वर्णकोटीश्चोपार्ज्य भूरिशः ॥ १२८ ॥
सनालीकान् गतश्रीकान्, सङ्गतान् बान्धवान्निजान्। भास्वानिव सलक्ष्मीकान्, निर्विकारश्चकार सः॥१२९
कुटुम्बकलहं दृष्ट्वा, कलहंस इवाम्बुदम्। मानसे सरसीवागादत्र पद्माकरे पुरे ॥ १३० ॥
अभिज्ञानाभिधानात्तं, विज्ञा विज्ञाय सा प्रियम्। लज्जयाऽधोमुखीजाता, सतीनां यदियं स्थितिः १३१
अलङ्कारांशुकैः स्फारांशुकैस्तेन प्रसाधिता। सा गृहस्वामिनी रेजे, यामिनीव कलावता ॥ १३२ ॥

१ सशल्यान्

न तिष्ठति निमेषार्धं, प्राङ्निमेषाऽद्य तिष्ठति । सत्यः पत्युर्गृहं मुक्त्वाऽन्यत्र तिष्ठन्ति न क्षणम् ॥ १३३ ॥
नच श्रीधन्यराजः क्षमाकल्पद्रुः स्थितिमुज्झति । विषमा वा मनोवृत्तिः, प्रभूणामिति चिन्तयन् ॥ १३४ ॥
श्रेष्ठी वृद्धां वधूं शङ्काशङ्कुसङ्कुलहृज्जगौ । वत्से ! गत्वा विलोकस्व, तदोकः सा किमु स्थिता ? ॥ १३५ ॥
॥ विशेषकम् ॥

गेहिनी धनदत्तस्य, लात्वागात्तत्र दोहनीम् । तस्या वीक्ष्य तथावस्थामपूर्वां ववले च सा ॥ १३६ ॥
वृत्तान्तं कथयामास, धनसाराय सा रयात् । स पपात क्षितौ श्रुत्वा, जातवज्राभिघातवत् ॥ १३७ ॥
ध्यातवान् जातचैतन्यश्चैतन्द्याश्चितकन्धरः । कथं कलङ्कितो वंशः, शीलध्वंसनयाऽनया ? ॥ १३८ ॥
विदेशः कष्टसन्देशः, कलङ्कः कुलपङ्ककृत् । निःस्वता विश्वनिन्द्या च, सहेतान्नित्रयं हि कः ? ॥१३९॥
कं पृच्छामि ? क्व गच्छामि? कं भजामि ? यजामि कम् ? । कंकरोमितलक्ष्मीकः, कं करोमि स्वपक्षगम्? १४०
तथापि कथयिष्यामि, स्वजातिव्यवहारिणाम् । स्वजातेः पक्षपातं यत्तिर्यञ्चोऽपि हि कुर्वते ॥ १४१ ॥
ध्यात्वैवं दैवदग्धोऽसौ, तदैव वणिजां पुरः । तं वृत्तान्तं जगौ श्रेष्ठी, नितान्तं दीनतां दधत् ॥१४२॥

वणिग्भिर्भणितं नायमन्यायमतनोत्पुरा । ख्यात आबालभूपालं, परनारीसहोदरः ॥ १४३ ॥
अलीकं भाषते नैवाप्रत्यनीको भवानपि । किंकर्तव्यतया मूढा, भद्र! किं कुर्महे? वयम् ॥ १४४ ॥
तथापि कथयिष्यामो, धन्याय न्यायवेधसे । साम्प्रतं साम्प्रतं यत्स्याद्भद्र! भद्रङ्करं च ते ॥ १४५ ॥
वणिजः प्रणिगद्येति, गता धन्यस्य वेश्मनि । चिरं गिरं विमृश्याहुः, सर्वेऽपि भयवेपिताः ॥ १४६ ॥
सूरोत्सङ्गे तमःपूरो, रेणुच्छालो महार्णवे । तापप्रथा यथा नेन्दौ, त्वय्यनीतिस्तथा नहि ॥ १४७ ॥
पश्चिमायां समायाया–त्कदाचिदुदयं रविः । ध्रुवोऽप्यध्रुवतां दध्या–त्कल्पान्तपवनेरितः ॥ १४८ ॥
मेरुर्नमेरुवत्कम्प्रः, सागरोऽपि मरोः समः । जायेत जातु वातोऽपि, सञ्जातस्थिरतोऽथवा ॥ १४९ ॥
कदाचिदनलो वापि, शीतलो भूतले भवेत् । न पुनः कथमप्येष, लोभविक्षोभवान् भवान् ॥ १५० ॥
विज्ञप्यसे तथाप्येतद्धनसारोपरोधतः । रोधतोऽस्य वधूं मुञ्च, सविचारोऽसि बोधतः ॥ १५१ ॥
तेषामिति वचः श्रुत्वा, स तन्वानः स्मितं मनाक् । अनाकर्णितकेनान्यां, वार्तां कर्तुं प्रचक्रमे ॥१५२॥
ज्ञात्वा धन्यस्य चेतस्ते, चतुरा इङ्गितादिभिः । उत्थाय स्वगृहान् जग्मुः, परार्थे क्लिश्यते हि कः? ॥१५३॥

धनसारः स्वयं गत्वा, गवाक्षस्थमभाषत । धन्यमुच्चैर्महाभाग !, वधूमेतां विमुञ्च मे ॥ १५४ ॥
धन्यस्ततो भटानाह, साहसादेष याचते । अवधूय भयं श्रेष्ठी, वधूमर्पयताथ ताम् ॥ १५५ ॥
धन्यभ्रूसंज्ञयाऽऽनिन्ये, तदा श्रेष्ठ्यपि तैर्भटैः । मध्येसौधमथागत्य, पितरं सोऽपि चानमत् ॥ १५६ ॥
जगाद सादरं धन्य-स्तन्यमानकराञ्जलिः । क्षन्तव्यं तातपादैर्मे, बालचापलजृम्भितम् ॥ १५७ ॥
अथानन्दाद्भुताक्रान्तो, जातोऽसौ पुत्रदर्शनात् । उत्कल्लोलः कथं न स्याच्चन्द्रालोकनतोऽर्णवः ?॥१५८॥
गृहान्तः स्थापयित्वाथ, तातमातङ्कवर्जितः । गूढाभिप्रायतो धन्यः, पुनर्वातायनं ययौ ॥ १५९ ॥
दुःखोपतापितस्वान्ता, धन्यमाताऽपि तावता । तं भर्तृशुद्धये प्राप्ता, जगाद सविषादहृत् ॥ १६० ॥
स्नुषां मे निस्तुषाचारां, यदि रे नैव मुञ्चसि । तदा तया समं क्रूर !, दूरे दूरेणुवद्व्रज ॥ १६१ ॥
तोषितो रोषितो वाऽपि, त्वं करोषि परं किमु ? । एकं मेऽर्पय भर्त्तारं, जरया जर्जरं पुनः ॥ १६२ ॥
तया दुःखितया धन्य, एवमुक्तः स वेगतः । ननाम ज्ञापयित्वा स्वं, साऽपि हृष्टा गृहे स्थिता ॥१६३॥
भ्रातरः कातरस्वान्ताः, क्रमात्पित्रादिशुद्धये । आयुर्वायुजवादायु-ष्मता धन्येन चानताः ॥ १६४ ॥

स्थापितास्तेऽथ गेहान्तर्देहान्तः सद्गुणा इव । वस्त्राभरणताम्बूलैः, सत्कृत्यानेन भक्तितः ॥ १६५ ॥
एषां योषात्रयं द्वाःस्थैः, प्रविशद्वारि वारितम् । नगैरिव सरिद्वारि, परितश्चिरमभ्रमत् ॥ १६६ ॥
तत्र याममवस्थाय, दुरवस्था ययुः पुनः । सायमायतशोकार्त्तास्तास्तटाकतटीकुटीः ॥ १६७ ॥
उर्वि ! कुर्विष्टमस्माकं, मातः पातकृतेऽधुना । ददस्व विवरं दुःखविवशाः प्रविशाम यत् ॥ १६८ ॥
विलापानिति कुर्वाणा, इलालुठनलालसाः । शतयामामिवानैषु–स्त्रियामामपि तास्तदा ॥ १६९ ॥
अथ ताः श्लथताप्राप्त–लज्जाः सज्जाः कलेः कृतौ । सभां प्रापुर्महीपस्य, कस्य हि क्षान्तिरापदि ? १७०
दैवेन गमिता दौःस्थ्यं, तव द्रङ्गमिता वयम् । सरः खनामो धन्यस्य, सुखनामोज्झिता नृप ! ॥१७१॥
इत्युक्त्वा तत्र दानादि–कुटुम्बस्थापनावधि । वृत्तान्तमूचिरे सर्वमचिरेण नृपाय ताः ॥ १७२ ॥ युग्मम् ॥
देव[2] ! सेवकवात्सल्या–मृतकुल्याप्रवाहतः । अस्मन्मनोवनोत्स्रसं, दाहमाहन्तुमर्हसि ॥ १७३ ॥
अस्मद्देवरदाराणा–ममुना मोहतोऽधुना । पञ्चतामापिताः पञ्च, किं भर्तृश्वशुरादयः ? ॥ १७४ ॥

---

१ पञ्चम्यस्मद्बहुवचनमामव्. २ देवस्तु नृपतौ तोयदे सुरे.

किंवा जीवन्त एवामी, वामीभूतधियामुना । कारागारान्तरे क्षिप्तास्तत्संभालय भूप! तान् ॥ १७५ ॥
धन्यरुद्धं कुटुम्बं नः, कृपासश्चय! मोचय । गजात्तं त्याजयेत् सिंहादन्यो वन्योऽत्र कः शशम्? ॥१७६
निर्धनानामनाथानां, पीडितानां नियोगिभिः । वैरिभिश्चाभिभूतानां, सर्वेषां शरणं नृपः ॥ १७७ ॥
श्रुत्वा प्राप्रु रुषं भूपादयोऽथ प्रेष्य पूरुषम् । धन्यायाज्ञापयन्नेवमन्यायस्तव नोचितः ॥ १७८ ॥
मुञ्च वैदेशिकान् सर्वान्, गर्वान्मार्गं किमुज्झसि? ।सन्तः कण्ठगतप्राणा, अप्यकृत्यं न कुर्वते ॥ १७९
धन्योऽपि पूरुषं प्राह, नाहमाहन्मि सत्पथम् । प्रत्यूषाभ्युदितः पूषा, लोकालोकं भनक्ति किम्? ॥१८०
जातु संपातुकः स्यां चेदुत्पथे तद्रुणद्धि कः? । चलिते चक्रिणश्चक्रे, कश्चक्रे रोधनं पुरा? ॥ १८१ ॥
भूपोऽत्र तातिकर्त्ता चेदमुमप्यस्मि शास्मि तत् । लक्षानीकस्य जेताहं, शतानीकस्य का कथा? ॥ १८२ ॥

॥ विशेषकम् ॥

पुरुषः सरुषस्तस्य, वाचः काश्चन गर्विताः । श्रुत्वा गत्वा च नत्वा च, भूपाय प्राह सत्वरम् ॥ १८३ ॥
तद्गर्ववचनात्क्रुद्धो, राजा युद्धोद्यतं तदा । निजानीकं शतानीकः, प्राहिणोद्धन्यमन्दिरे ॥ १८४ ॥

धन्योऽपि स्वीयमश्वीयं, पादातं हास्तिकं तथा । संमील्य क्ष्मापसैन्येन, सहाहवमतन्तनीत् ॥ १८५ ॥
आपतत्पार्थिवानीकं, गर्जद्गजतुरङ्गमम् । धन्यः पराङ्मुखं चक्रे, सरित्पूरमिवाचलः ॥ १८६ ॥
स्वसैन्यदैन्यमालोक्य, रुष्टः पुष्टबलो नृपः । स्वयं स्वयं श्रयंश्चित्ते, धन्यं जेतुं प्रचेलिवान् ॥ १८७ ॥
वेश्मरक्षां विधायाथ, पृथ्वीनाथस्य संमुखम् । धन्यः प्रतस्थे प्रारब्ध–समरोऽसमरोषतः ॥ १८८ ॥
अथाकुलाः कुलामात्या, मा त्याक्षीः स्वप्रतिष्ठितिम् । देव ! सेवकयुद्धेनेत्यवनीपं व्यजिज्ञपन् ॥ १८९ ॥
देव ! धन्यः स्वजामाता, मा तावद्धन्यतामसौ । नाथ सार्थपतावस्मिन्, हते शौर्यं यशोऽपि ते ॥ १९० ॥
अयं स्वयं त्वया नीतो, वृद्धिं न च्छेदमर्हति । यद्वक्षैर्विषवृक्षोऽपि, न च्छिद्येत स्वरोपितः ॥ १९१ ॥
न जामातुः प्रमाथाय, नाथायं युज्यते रणः । लकुटं स्वकुटुम्बस्य, प्रहाराय बिभर्त्ति कः? ॥ १९२ ॥
कल्पपात्री भवेद्धात्री, पाथोनाथोऽपि शुष्यति । तथापि कुपथाध्वन्यो, धन्यो जातु न जायते ॥ १९३ ॥
रुद्धाः क्रुद्धात्मनेवासां, साधुनाप्यधुनाऽमुना । यद्भर्तृप्रमुखास्तत्र, हेतुः कोऽपि भविष्यति ॥ १९४ ॥
प्रादुष्कारिष्यते गूढोऽप्येष बुद्धिविशेषतः । अदृश्यं हि किमस्माकं, मन्त्रिणां शास्त्रचक्षुषाम्? ॥ १९५ ॥

एवं निगद्य सद्यस्ते, प्राहुराहूय योषितः। किंकुलाः? किंधना? यूयं, किंग्रामा? ब्रूत सूनृतम् ॥ १९६॥
एवमुक्ता विमुक्ताश्रु–जला निजकुलादिकम्। सर्वं वृत्तान्तमूचुस्ता–स्तटाकखननावधिम् ॥ १९७ ॥
प्रतिभायत्रिणः श्रुत्वा, तदुक्तमथ मन्त्रिणः। अमन्त्रयन्त विज्ञातवस्तुतत्वा इदं मिथः ॥ १९८ ॥
योऽत्यन्तं भाग्यवानाभिरभ्यधायि स्वदेवरः। धन्याभिधः स एवासौ, प्रोक्तसंवाददर्शनात् ॥ १९९ ॥
तक्रदानादिकां मायां, निर्मायानेन धीमता। स्वजायाः स्थापिताः पूर्वं, पश्चात्पित्रादयोऽपि च ॥ २००॥
विचार्यैवमभाषन्त, धीसखा योषितः प्रति। कथं धन्यो भवद्देवा, नृदेवैरपि लक्ष्यते ॥ २०१ ॥
योषास्तोषाश्रितस्वान्तास्त्यक्तरोषा अथोचिरे। पद्मासद्मानि पद्मानि, पादयोस्तस्य लक्षणम् ॥ २०२ ॥
ततस्तत्पादपद्मस्थ–पद्मलक्ष्मदिदृक्षया। ताभिर्भूपप्रधानानि, सार्धं धन्यान्तमैयरुः ॥ २०३ ॥
भ्रातुर्जायाः समायाताः, स मायावी नमोऽकरोत्। जगौ च कातरस्वान्ता, मातरः किमिहागताः? २०४
दृष्ट्वोपलक्ष्य चैनं ता, नन्तारं व्याहरन्निति। आयासयासि मायाभिः, किमस्मान्? देवरोसि यत् ॥२०५
स प्राह हृद्ये! हृद्येष, युष्माकं को भ्रमोऽभवत्?। स्युर्मन्ददृष्टयो यद्वा, गर्त्तान्तर्जातु पातुकाः॥ २०६

यं यं धन्याभिधं यूयं, द्रक्ष्यथ क्षितिमण्डले। स्वंदेवरतया तं तं, वदन्त्यो हास्यमाप्स्यथ ॥ २०७ ॥

ता ऊचिरे चिरेण त्वमभिज्ञातस्तथापि ते। क्रमौ प्रक्षाल्य मञ्चयाद्याः, प्रत्याय्याः पद्मदर्शनात् ॥ २०८

धन्योऽवक् परमानिन्यो, न स्पृश्याः सरमा इव। नेच्छाम्यालापमप्याभिर्दूरेऽङ्घ्रिक्षालनं मम ॥ २०९ ॥

सचिवाः शुचिवाचां तेऽभ्यधुरित्थं धुरि स्थिताः। माऽऽयासय मुधा साधो!, बन्धुजाया निजा इमाः ॥२१०॥

इत्युक्तः सचिवैर्धन्यो, नर्मकर्म विमुच्य तत्। स्वबन्धुजायाः प्राहैषीन्मनीषी निजसद्मनि ॥ २११ ॥

अदैन्यः सैन्यसंरम्भं, त्यक्त्वा धन्योऽनमन्नृपम्। सोऽप्यर्द्धासनदानाद्यैः, सत्कृत्येति तमभ्यधात् ॥ २१२ ॥

अवेदितात्मना भ्रातृदयिताः खेदितास्त्वया। किं मुधा? यद्बुधा न स्वान्, वञ्चयन्ते कदाचन ॥ २१३ ॥

व्याजहार च निर्व्याजमनसा धनसारसूः। हेतुं क्षोणिपते! भ्रातुर्जायाऽत्यायासने शृणु ॥ २१४ ॥

सुश्लिष्टानामपि भ्रातृमनसां तालकायसाम्। विश्लेषं कुरुते नारी, कुञ्चिकेव क्षणादपि ॥ २१५ ॥

तावद्बन्धुमनोभूमौ, रम्या स्नेहवनावली। यावन्न ज्वलति स्त्रीणां, विश्लेषवचनानलः ॥ २१६ ॥

---

१ शुन्यः।

विश्वस्यं देव! नारीणां, नारीणां च विशेषतः। विरक्ता अरयो घ्नन्ति, नार्यो रक्ता अपि क्षणात् ॥ २१७ ॥
यत उक्तम्—सुवंशजोऽप्यकृत्यानि, कुरुते प्रेरितः स्त्रिया। स्नेहलं दधि मथ्नाति, पश्य मन्थानको न किम्? ॥
गृहीतहस्तकः प्रेयान्, प्रेयसीभिर्घरट्टवत्। भ्रामितः पितृमात्रादिस्नेहं दलयति क्षणात् ॥ २१९ ॥
नरः कुकुलनारीभिः, खाद्यमानोऽपि हृष्यति। असिर्भवति तेजस्वी, घृष्यमाणोऽपि शाणया ॥ २२० ॥
चतुरः सृजता राजन्नुपायाँस्तेन वेधसा। न सृष्टः पञ्चमः कोऽपि, गृह्यन्ते येन योषितः ॥ २२१ ॥
उपकारा जलासारा, इव नैके मया कृताः। अमूषु व्यर्थतां प्रापुः, परमूषरभूमिषु ॥ २२२ ॥
वहन्ति बन्धवः श्लिष्टा, भार्याभिस्तटाभित्तिभिः। वारिताः सरितां वाहा, इवोन्मार्गप्रवृत्तितः ॥ २२३ ॥
उपायैर्मदभेदाय, मयैताः खेदितास्ततः। ज्वरनाशाय वैद्येन, तनवः शोषणैरिव ॥ २२४ ॥
इत्यादिप्रीतिवार्त्ताभिर्भूयो धन्येन रञ्जितः। तद्भाग्याद्भुतचित्रीयमाणोऽगान्निजमन्दिरम् ॥ २२५ ॥
नमस्यति स्म धन्योऽपि, पित्रादीन् मुदितान् मुदा। तत्पृष्टाः पूर्ववृत्तान्तं, तेऽप्याचख्युर्यथास्थितम् ॥२२६॥
ततः संमानयन् भक्त्या, धन्यः स्वजनकादिकान्। रेजे धन्यवदान्येषु, चक्रवर्त्तीव राजसु ॥ २२७ ॥

परीक्षादक्षो यद् व्यवहतशतानीकतनयामनीकेनानीकं स्वजनमिलनेऽसौ यदभनक् ।
इयं दानस्वर्द्रोः कुसुमलवलीला तदिह भो !, मुचः शुश्रूषां मा सुजन ! जिनकीर्त्तिस्फुटफले ॥२२८॥

इति श्रीतपागच्छेशपरमगुरुश्रीसोमसुन्दरसूरिविनेयश्रीजिनकीर्त्तिसूरिप्रणीते श्रीधन्यचरित्रशालिनि श्रीदानकल्पद्रुमे सौभाग्यमञ्जरीपरिणय-स्वजनसमागमवर्णनो नाम षष्ठः पल्लवः ॥ ६ ॥

---

## अथ सप्तमः पल्लवः

अथ दध्यौ धियां धाम, धन्यः प्रागिव बान्धवाः । मा कार्षुः पुनरप्येते, चित्तमप्रीतिचुम्बितम् ॥ १ ॥
अतः सत्वरमन्यत्र, यामि कामितनीवृतम् । भालयित्वाऽथ तान् राज्ञे, पुनर्मा दण्डनाऽस्त्विति ॥२॥ युग्मम्
ततः सोऽश्वान् गजान् ग्रामान्, सोदरेभ्यो ददौ मुदा । गृहसारं तथा सर्वं, जनकाय समार्पयत् ॥३॥
ममेव मत्कुटुम्बस्य, चिन्ता कार्येति भूपतिम् । निगद्यापृच्छ्य चाचालीद्धन्यो राजगृहं प्रति ॥ ४ ॥
पत्नीद्वययुतः सारपरीवारवृतस्ततः । दिनैः कतिपयैराप, मार्गे लक्ष्मीपुरं पुरम् ॥ ५ ॥
जितारिर्नृपतिस्तत्र, सर्वक्षत्रशिरोमणिः । क्षमात्यागोद्यते यत्र, शत्रवोऽपि तथाऽभवन् ॥ ६ ॥
तस्य गीतकलानाम्नी, सुता गीतकलानिधिः । साऽन्यदा क्रीडयोद्याने, सखीभिः सङ्गता गता ॥ ७ ॥
लीलान्दोलजलक्रीडापुष्पावचयकारिणी । साऽगायन्मधुरं गीतं, ग्रामरागमनोहरम् ॥ ८ ॥
गीतलीनास्ततस्तस्थुः, परितस्तां मृगाङ्गनाः । नारीमद्भुतलावण्यामिव कामुकदृष्टयः ॥ ९ ॥
तदैकस्याः कुरङ्गाक्षी, कुरङ्ग्याः कण्ठकन्दले । कौतुकान् मुमुचे हारं, सा च सारङ्गिकाऽनशत् ॥१०॥

गीतगानं विसृज्याथ, कन्याऽऽवसथमाययौ । अवादीच्च नृपं तात!, प्रतिज्ञामिति मे शृणु ॥ ११ ॥
स्वगीतकलयाऽऽकृष्य, प्रहृष्यन्मानसां मृगीम् । हारं यो मे ग्रहीताऽरं, परिणेता स एव माम् ॥ १२ ॥
तस्याः सन्धा प्रसिद्धाऽसौ, सर्वत्र नगरेऽभवत् । प्रथते ह्यद्भुता वार्त्ता, तैलबिन्दुरिवाम्बुनि ॥ १३ ॥
अथो जितारिसूसन्धां, धानसारिर्निशम्य ताम् । सभां प्राप महीपस्य, पश्यन् पौरजनाश्रियम् ॥ १४ ॥
उवाच च महीनाथ!, गीताकृष्टापि चेन्मृगी । त्रस्ताऽन्यत्र प्रयात्येषाऽद्भुता गीतकला हि का? ॥ १५ ॥
मृदङ्गभेरीभाङ्कारैरत्रस्ता जनसङ्कुले । आयाति चेन्मृगी गीताकृष्टा गीतकला हि सा ॥ १६ ॥
दृष्ट्वा तमद्भुताकारं, तच्चातुर्यचमत्कृतः । तन्मृग्यानयने राजा, हृष्टो धन्यं न्ययुङ्क्त सः ॥ १७ ॥
वीणामादाय धन्योऽपि, गन्धर्वपरिवारितः । प्रासस्तत्र वने गीतं, गीतवान् मधुरस्वरम् ॥ १८ ॥
लयप्राप्तेन गीतेन, तदाऽऽकृष्टा, मृगाङ्गनाः । काननान्तर्निवासिन्यो, धन्योपान्तमुपाययुः ॥ १९ ॥
हारालङ्कृतकण्ठापि, मृगी गीतवशीकृता । धन्यस्य पुरतस्तस्थौ, प्रियेव हृदयेशितुः ॥ २० ॥
गायन्नेव ततोऽचालीद्धन्यो नगरसंमुखम् । इन्द्रजालकलाशाली, लोकैरिव मृगैः समम् ॥ २१ ॥

नैकैर्लोककृतैः क्षोभैः, क्षोभितोऽपि न चुक्षुभे । गीतलीनो मृगव्रातो, योगीव ध्यानलग्नहृत् ॥ २२ ॥
रङ्गमध्येन धन्योऽथ, प्राप क्ष्मापस्य संसदम् । अन्वीयमानः सारङ्गैः, सरङ्गैर्नागरैरपि ॥ २३ ॥
एतत्किमेतत्किमिति, पार्थिवादिषु वादिषु । जहार हरिणीकण्ठपीठाद्धारमुदारधीः ॥ २४ ॥
अहो गीतकलादाक्ष्यमहो धैर्यमहो महः । अहो सौभाग्यभङ्ग्यस्येत्याश्चर्यरससंभृतैः ॥ २५ ॥
कन्याऽथ पार्थिवामात्यैः, सानन्दमभिनन्दिता । अक्षेपं सा निचिक्षेप, धन्यकण्ठे वरस्रजम् ॥ २६ ॥
अर्थतोयुग्मम् ॥
पूर्णप्रतिज्ञा राज्ञाऽथ, कन्या धन्याय सा ददे । शुभलग्ने तयोर्जातः, पाणिग्रहमहोत्सवः ॥ २७ ॥
दिनानि कतिचित्तत्र, चरित्रैश्चित्तचित्रकृत् । धानसारिः पुरे तस्थौ, श्रीजितारिनृपाग्रहात् ॥ २८ ॥
अथात्रैवाभवन्मन्त्रिपुत्री नाम्ना सरस्वती । सरस्वतीव सर्वस्वं, विद्यानां विदुषी हि या ॥ २९ ॥
प्रहेलिकासु सर्वासु, गूढप्रश्नोत्तरेषु च । समस्यापूरणे चास्या, नालस्यं प्रतिभाऽभजत् ॥ ३० ॥
यदुक्तं नावबुध्येऽहं, मदुक्तं वेत्ति योऽथवा । स एव मे विवोढा स्यात्, प्रतिज्ञातवतीति सा ॥ ३१ ॥

यद्यद्गूढसमस्यादि, नराः परिणिनीषवः । बहवोऽपि तदाऽप्राक्षुस्तत्तन्मङ्क्षु विवेद सा ॥ ३२ ॥
अथान्यदा स्फुरद्गर्वा, सर्वान् पण्डितमानवान् । मृगाक्षी श्लोकमप्राक्षीत्साक्षीकृत्य नृपं यथा ॥ ३३ ॥
गङ्गायां दीयते दानमेकचित्तेन भाविना । दाताऽहो नरकं याति, प्रतिग्राही न जीवति ॥ ३४ ॥
नास्यार्थं कोऽपि जानाति, ज्ञानातिशयवर्जितः । श्लोक आबालगोपालं, ख्यातो जातो जने ततः ॥३५॥
धन्यो लिखित्वा श्लोकार्थं, भूर्जे चैकां प्रहेलिकाम् । पाणीग्रहैषी प्राहैषीत्साऽप्यथैवमवाचयत् ॥ ३६ ॥
मीनो लाता गलो देयं, कन्ये! दाताऽत्र धीवरः । फलं यज्जायते तत्र, तयोस्तद्विदितं जने ॥ ३७ ॥
एकः श्लोको मदुक्तोऽपि, त्वया ज्ञेयोऽयमर्थतः । प्रहेलिकाब्जिनीकेलिवरले! सरले यथा ॥ ३८ ॥
न लगेन्नागनारङ्गे, निम्बतुम्बे पुनर्लगेत् । लगेत्युक्ते लगेन्नैव, मा मेत्युक्ते पुनर्लगेत् ॥ ३९ ॥
इति तज्ज्ञापितेन स्वश्लोकार्थेन चमत्कृता । चित्ते कन्याऽथ धन्यात्मश्लोकवाच्यं व्यचिन्तयत् ॥ ४० ॥
न विवेद परं वेदागमस्येव जनङ्गमी । अर्थं धन्योक्तवृत्तस्य, सा धीमत्यपि किञ्चन ॥ ४१ ॥

---

१ हंसि ।

गत्वाऽथ धन्यमप्राक्षीन्मृगाक्षी सोऽप्यभाषत । तदिदं विद्धि बिम्बोष्ठि! स्फुटमोष्ठपुटं ननु ॥ ४२ ॥
पुत्रीमाह ततो मन्त्री, सन्धा पूर्णाऽभवत्तव । सुवाणि! पाणिग्रहणं, कारयाणि ततोऽमुना ॥ ४३ ॥
तयाऽनुमेने तद्वाक्यमिष्टं को वा न मन्यते । धन्यं सत्कृत्य तौ मन्त्री, पर्यणाययदुत्सवात् ॥ ४४ ॥
इतश्च नगरे तत्र, पत्रमल्लो वणिग्वरः । अभवत् प्रतिभासत्रं, द्वात्रिंशत्स्वर्णकोटिपः ॥ ४५ ॥
चत्वारस्तनयास्तस्य, सनया विनयान्विताः । रामः कामस्तथा धामः, सामनामा चतुर्थकः ॥ ४६ ॥
अभूदभूमिर्दोषाणां, गुणानामेकमन्दिरम् । लक्ष्मीरिवास्य प्रत्यक्षा, नाम्ना लक्ष्मीवती सुता ॥ ४७ ॥
पुण्यपात्रातिमात्रार्थदानयात्राविधानतः । पत्रमल्लो व्यधाज्जन्म, सफलं नित्यमेव सः ॥ ४८ ॥
रोगैः शरीरगैस्तस्य, सरोगैः सैरिभैरिव । चेतनाऽऽकुलिता बाढमेकदा भेकदारवत् ॥ ४९ ॥
आसन्नं मरणं मत्वा, चतुःशरणमाश्रितः । विहिताराधनः सावधानः पुत्रानथाभ्यधात् ॥ ५० ॥
पुत्राः कुत्रापि किं दृष्टं? निःश्रीके नरि गौरवम् । कस्तूरीमपि निर्गन्धां, कस्तूरीकुरुते यतः ॥ ५१ ॥
सैकैव श्लाघ्यते लक्ष्मीः, कलङ्क्यपि यया जनः । देवानामपि मान्यः स्यान्मृगाङ्क इव सर्वदा ॥ ५२ ॥

धर्मस्य साधनं मुख्यं, श्रीरेव गृहमेधिनाम् । गीयते धान्यनिष्पत्तेः, पाथोदस्य प्रथा यथा ॥ ५३ ॥
हेतुः पुण्यस्य मन्तव्या, कमला समलाऽप्यसौ । प्रभवा किं न पद्मस्य?, पङ्किलापि भवेदिला ॥५४॥
प्रासादप्रतिमायात्रादयो धर्माः श्रियैव हि । निष्पाद्यन्ते यथा ग्रन्था, बुध्यैव विविधा बुधैः ॥ ५५ ॥
तावत्पिता हिताधायी, तावन्माताऽप्यतापिनी । तावत्प्रिया प्रियालापा, यावल्लक्ष्मीः स्थिरा गृहे ॥ ५६ ॥
तावत्कलाः कलाः सर्वा, हृद्या विद्यापि तावता । प्रगुणाश्च गुणास्तावद्यावल्लक्ष्मीः स्थिरा गृहे ॥ ५७ ॥
गुणा एते यथा लक्ष्म्यास्तथा दोषाः सहस्रशः । इष्टयोगा इवानिष्टयोगाः किं नहि संसृतौ? ॥ ५८ ॥
यतः—निर्दयत्वमहङ्कारस्तृष्णा कर्कशभाषणम् । नीचपात्रप्रियत्वं च, पञ्च श्रीसहचारिणः ॥ ५९ ॥
अर्थोऽनर्थप्रदोऽप्येष, तथाऽपि प्रार्थ्यते भृशम् । कृताजीर्णादिदोषोऽपि, यथाऽऽहारः शरीरिभिः ॥ ६० ॥
श्रिया प्राप्तपरिक्लेशा, अपीहन्ते श्रियं नराः । वह्नेः स्पृहामिहादध्युर्वह्निदग्धगृहा न किम्? ॥ ६१ ॥
क्षणगत्वरलक्ष्मीणां, कृतेऽनेकभवास्थिरम् । नाशयन्ति जडाः प्रेम, पादशुद्ध्यै यथाऽमृतम् ॥ ६२ ॥
श्रियाऽनयेन्द्रजालिन्या, मालिन्याऽऽकुलचेतसः । भ्रातृभिः शत्रुभिरिव, युध्यन्ते पुरुषा रुषा ॥ ६३ ॥

तन्मिथः शिथिलस्नेहैर्युष्माभिः श्रीकृते कलिः । न सेव्यः कलिनाम्ना यत्, फलदोऽपि किलोज्झ्यते ॥ ६४॥
भवद्भिः सर्वदा स्थेयमन्योऽन्यस्नेहतोऽपृथक् । गजेन्द्रमपि बध्नन्ति, संहतास्तन्तवोऽपि हि ॥ ६५ ॥
भिद्यन्ते भूधरा येन, धरा येन विदार्यते । संहतेः पश्यत प्रौढिं, तृणैस्तद्वारि वारितम् ॥ ६६ ॥
संहतिः श्रेयसी पुंसां, स्वपक्षे तु विशेषतः । तुषैरपि परित्यक्ता, न प्ररोहन्ति तण्डुलाः ॥ ६७ ॥
निजैरेव वृतः शोभां, लभते निर्धनैरपि । अन्तर्धाने कृते शाण्या, वस्त्रं ह्यट्टेऽर्घमर्घति ॥ ६८ ॥
प्रतापो गौरवं पूजा, श्रीर्यशः सुखसंपदः । कुले तावत् प्रवर्धन्ते, यावन्नोत्पद्यते कलिः ॥ ६९ ॥
परैरपरिभूतोऽपि, कुटुम्बकलिना नरः । क्षीयतेऽल्पदिनै राजयक्ष्मणेव महाभटः ॥ ७० ॥
पुत्रपौत्रादिवृद्धौ चेद्रोद्धुं शक्येत नो कलिः । तदा पृथक् पृथक् स्थेयं, हेयं चान्योन्यदौर्हृदम् ॥ ७१ ॥
युष्मन्नामाङ्किता वत्साश्चत्वारः कलशा मया । चतुर्षु गृहकोणेषु, न्यस्ताः सन्ति हिताय वः ॥ ७२ ॥
ग्राह्यास्ते स्वस्वनामाङ्का, न कार्यश्च मिथः कलिः । चत्वारोऽपि यतः सन्ति, ते समानधनाः किल ॥ ७३ ॥
दत्त्वा सत्त्वाधिकः शिक्षामिति स्वतनुजन्मनाम् । क्षमयित्वा त्रिधा सत्त्वान्, स त्वापद् द्युसदां गतिम् ७४

तातशिक्षामुपादाय, रामकामादयः सुताः । समयं गमयन्ति स्म, कियन्तं स्नेहसिन्धवः ॥ ७५ ॥

पुत्रपौत्रादिसन्ताने, वर्धमानेऽथ ते कलिम् । वर्धमानं विलोक्यास्थुश्चत्वारोऽपि पृथक् पृथक् ॥ ७६ ॥

चतुर्भिरपि तैः कुम्भाः, कृष्टा हृष्टाननैर्द्रुतम् । बालस्यापि धनप्राप्तावालस्यादि भवेन्न यत् ॥ ७७ ॥

सुतस्य ज्यायसः कुम्भे, मषीभाजनकं मषी । लम्बाश्च वहिकापट्टा, लेखन्यश्चालुलोकिरे ॥ ७८ ॥

द्वितीयस्य तनूजस्य, सेतुकेतुमहीभृदः । शुभान्तःकरणस्याथ, कुम्भान्तर्दृक्पथं गताः॥ ७९ ॥

करिणां करभाणां च, खराणां वाजिनामपि । तृतीयस्य घटस्यान्तर्दृष्टान्यस्थीनि भूरिशः ॥ ८० ॥

कोटयस्तपनीयस्य, तनयस्य कनीयसः । ज्योतिर्द्योतितसर्वाशाः, अष्ट दृष्टा घटान्तरे ॥ ८१ ॥

तान् कुम्भान् प्रेक्ष्य पौरस्त्याः, सुताः श्यामा भृशं त्रयः । असितद्वादशीरात्रेर्याभा इव विरेजिरे ॥८२॥

सशातकुम्भं वीक्ष्य स्वं, कुम्भं तुर्योऽङ्गजोऽतुषत् । नरो न रौक्मद्रम्माणां, लाभे हृष्यति कोऽथवा? ॥८३॥

कनीयानप्यवापासौ, महत्त्वं रमया तया । अर्घ न लभते कान्त्या, तनीयानपि किं मणिः? ॥ ८४ ॥

लोभाज्जातमनःक्षोभा, अशोभाकारिभाषिणः । वृद्धाः स्वर्णनिधानस्य, भागं सर्वे ययाचिरे ॥ ८५ ॥

यदा ददौ न तद्भागं, कनीयानकनीयसाम् । तदा मिथः श्लथस्नेहा, गेहान्तस्ते कलिं व्यधुः ॥ ८६ ॥
निर्दम्भन्यायलाभाय, गतास्तेऽथ चतुष्पथम् । पाथोदाः क्षीरपाथोधिं, सलिलप्राप्तये यथा ॥ ८७ ॥
तत्राप्यप्राप्तसन्न्याया, उपभूपमथागमन् । भृशं विवदमानास्ते, सर्वज्ञमिव तार्किकाः ॥ ८८ ॥
तत्कलिर्न यदा भग्नश्चतुरैरपि मन्त्रिभिः । नृपाज्ञया तदा धन्यः, प्रोवाचेदममन्दधीः ॥ ८९ ॥
द्रव्यस्यांशाः समा एव, प्रदत्ता जनकेन वः । भो ! भद्रास्तातवात्सल्यं, तनयेषु समं यतः ॥ ९० ॥
यस्मिन् यस्य हि पुत्रस्य, कौशल्यं क्रमते मतेः । तस्य तत्कर्म शर्मैकहेतुः पित्रा निरूपितम् ॥ ९१ ॥
कलान्तरगतं द्रव्यं, वहिकाद्युपलक्षणात् । आद्याय सूनवे दत्तं, पण्डितः खलु तत्र सः ॥ ९२ ॥
कोष्ठागाराणि धान्यानां, क्षेत्राणि च मृदर्पणात् । तद्वाणिज्यप्रवीणाय, द्वितीयाय वितेनिरे ॥ ९३ ॥
गजाश्वगोमहिष्यादिचतुष्पदधनं ददे । तत्रैव लब्धलक्षाय, तृतीयाय तनूरुहे ॥ ९४ ॥
लघीयांस्तु वणिज्यादि, न वेत्त्यद्यापि किञ्चन । तेन रत्नहिरण्यादि, श्रेष्ठिनाऽस्मै समर्पितम् ॥ ९५ ॥
सङ्ख्यानेन च सर्वेषामष्टाष्टस्वर्णकोटयः । सुतानां ददिरे मन्ये, यदि रे मन्यते वचः ॥ ९६ ॥ कुलकम् ॥

आचष्ट प्रथमः पृष्टो, वृद्धिद्रव्यप्रमामिति । इभ्यादिभ्यः सदा लभ्या, सन्त्यष्टौ हेमकोटयः ॥ ९७ ॥
अद्वितीयमतिः प्राह, धनसङ्ख्यां द्वितीयकः । सेतुभिः केतुभिर्धान्यकोष्ठागारैश्च तावतीम् ॥ ९८ ॥
तृतीयः प्राह वाहानामयुतं हस्तिनां शतम् । गोकुलानां शतं स्वामिन्नुष्ट्रा अष्टायुती तथा ॥ ९९ ॥
ततो राज्ञा धन्यबुद्धिविस्मितेन महाधनाः । विसृष्टा हृष्टचित्तास्ते, भग्नवादा गृहानगुः ॥ १०० ॥
अथैतत्प्रतिभाभाग्यकलाहृतहृदो ददुः । रूपलक्ष्मीवतीं लक्ष्मीवतीं धन्याय ते कनीम् ॥ १०१ ॥
इतश्चात्रैव कृष्यादिकर्मासीनमनाः सना । नामतो धनकर्मासीन्नैगमः सङ्गमः श्रियाम् ॥ १०२ ॥
न त्यागाय न भोगाय, भूयस्योऽप्यस्य संपदः । स्त्रियो नपुंसकस्येव, केवलं वेश्ममण्डनम् ॥ १०३ ॥
अन्यदा मागधः कश्चिद्वागधःकृतगीःपतिः । ययाचे धनकर्माणं, सुधारसकिरा गिरा ॥ १०४ ॥
विलम्बसे कथं दातुं?, नायुषः प्रतिभूर्यतः । दीर्घनिद्रां दृगेवाह, निमेषामिषघूर्णनात् ॥ १०५ ॥
देहिभ्यो देहि सन्देहिस्थैर्या मा संचिनु श्रियः । हरन्त्यऽन्ये वने पश्य, भ्रमरीसंचितं मधु ॥ १०६ ॥
विशीर्यन्ते कदर्यस्य, श्रियः पातालपङ्क्तिमाः । अगाधमन्धकूपस्य, पश्य शैवलितं पयः ॥ १०७ ॥

श्रेष्ठी प्रतारयन् प्राह, श्वः प्रदास्यामि ते ध्रुवम् । भोजनं भो जनं भद्र !, याचस्वाद्य पुनः परम् ॥१०८॥
एवमुक्ते गतः सूतः, स प्रभूतप्रमोदभाक् । द्वितीयस्मिन् दिने प्रातस्तथैव तमयाचत ॥ १०९ ॥
वैतालिक ! किमुत्तालः, कल्ये वैकालिकं तव । धीरो भव प्रदास्यामि, धनकर्मेत्यभाषत ॥ ११० ॥
सदा प्रत्युत्तरं सोऽदादेवमेव यदा तदा । बन्दी स मन्दीभूताशश्चिन्तयामासिवानिति ॥ १११ ॥
मितंपचः प्रपञ्चेन, केनचित् कार्यते व्ययम् । पादावर्त्तमनावर्त्य, किं कूपात्कृष्यते जलम् ? ॥ ११२ ॥
वक्रशीलः सदाचारं, बलात्कारेण कार्यते । आकृष्टं ध्रियते यावद्धनुस्तावत्सुवृत्तभृत् ॥ ११३ ॥
अस्यापि तदुपायेन, कमलाः सफला अहम् । स्वीकृत्य कृत्यवित्कुर्वे, त्यागभोगविधानतः ॥ ११४ ॥
ध्यात्वेति धनकोटीच्छुः, कर्णमोटीसुरीगृहम् । गतः सूतः प्रतारण्या, विद्यायाः साधनाय सः ॥११५॥
विद्याराधनमाधातुं, सावधानमना व्यधात् । उपवासान् कृतव्यापत्प्रवासानेकविंशतिम् ॥ ११६ ॥
ततो मौनतपोमन्त्रजापहोमादिभिः स ताम् । भट्टः सन्तुष्टमनसं, ययाचे चण्डिकामिति ॥ ११७ ॥
देहि रूपपरावर्त्तविद्यां देहिप्रियप्रदे ! । साप्येतां प्रददौ तस्मै, किं न देयं सुपर्वणाम् ? ॥ ११८ ॥

व्यधत्त विद्यया रूपं, श्रेष्ठिनो धनकर्मणः ॥ ११९ ॥

ततः स भृशमानन्दी, बन्दी विहितपारणः । तद्रूपेण गतस्तस्य, गेहे पुत्रानभाषत ॥ १२० ॥

तावद्ग्रामान्तरं प्रासे, धनकर्मणि स द्रुतम् । अद्राक्षं च मुनिं मार्गे, धर्ममाख्यान्तमार्हतम् ॥ १२१ ॥

व्यावृत्तः शकुनाभावाद्वत्सा! ग्रामान्तरादहम् । वात्याव्यतिकरोत्क्षिप्त-तूलतुल्यं च यौवनम् ॥ १२२ ॥

कल्लोलचपला लक्ष्मीः, सङ्गमाः स्वप्नसंनिभाः । धर्मकल्पतरोश्छाया, सेव्यतामविनश्वरी ॥ १२३ ॥

ततः शाश्वतसौख्यर्द्धिवर्धिष्णुफलशालिनः । सम्यग् निशम्य जातोऽहं, निर्ममत्वो धनादिषु ॥ १२४ ॥

पुत्राः सुत्रामवन्द्यस्य, महर्षेर्देशनामिति । दानमेव फलं ह्येषां, विश्वानर्थप्रदायिनाम् ॥ १२५ ॥

धनानि पात्रसात्कर्तु, वत्सा! इच्छामि शुद्धधीः । सीदद्भ्यः स्वजनेभ्यश्च, याचकेभ्यश्च भूरिशः ॥ १२६ ॥

इत्युक्त्वा स ददौ द्रव्यं, दीनादिभ्यो यदृच्छया । अष्ट स्पष्टमनीयन्त, कपटश्रेष्ठिना व्ययम् ॥ १२७ ॥

स्ववशैर्दिवसैरेवमष्टभिर्धनकोटयः । श्रुतपूर्वी व्ययं रायामागादागारमात्मनः ॥ १२८ ॥

ग्रामान्तरं विनिर्माय, निर्मायः श्रेष्ठ्यपि द्रुतम् । खेदं च स्वजनाः सर्वे, ही संसारविचित्रता ॥ १२९ ॥

धनकर्मक्षयं दृष्ट्वा, दुर्जना हर्षमैयरुः ।

पृष्ठः स्वगृहसङ्केतानपि पुत्रादिभिर्जगौ । चूडामण्यादिवेदित्वादसत्योऽपि स सत्यवत् ॥ १३० ॥

सत्यासत्यविभागाज्ञैः, स्वजनैर्द्वावपि द्रुतम् । गृहान्निर्धाटितौ नित्यमकार्ष्टां कलहं मिथः ॥ १३१ ॥

ततो भूपसभं प्राप्तौ, प्रसभं कलिकोविदौ । सत्योऽहं नायमित्यादिवादिनौ वादिनौ यथा ॥ १३२ ॥

कर्तुं विभागो नापारि, तयोः कैरपि मन्त्रिभिः । सुप्रयुक्तस्य दम्भस्य, यतो ब्रह्माऽपि नान्तकृत् ॥१३३॥

विभागं प्रतिभाशाली, यः कश्चित्कुरुतेऽनयोः । धनकर्मसुता तस्मै, दीयते गुणमालिनी ॥ १३४ ॥

धन्यः क्ष्मापजनैस्तन्यमानामुद्घोषणामिमाम् । निषिध्य धीनिधिः शीघ्रमुपभूपमुपेयिवान् ॥ १३५ ॥

उपायज्ञः समादाय, करकं करपङ्कजे । पार्श्वे तौ स्थापयित्वा च, श्रेष्ठिनौ वादिनाविव ॥ १३६ ॥

मुखेनास्य प्रविश्यान्तर्नालेन बहिरेति यः । स सत्यो नापरः श्लिष्टमेवं धन्योऽवदत्तदा ॥ १३७ ॥ युग्मम्॥

लघुरूपं विधायाथ, मायाश्रेष्ठी स्वविद्यया । करकान्तः प्रविश्यासौ, नालेन निरगाद्बहिः ॥ १३८ ॥

धन्योपायात्स मायावान्, क्षमाया विभुना ततः । ज्ञातो निबध्य वध्यश्चादिष्टोऽवन्ध्यरुषा यदा ॥ १३९ ॥

---

१ अपरपक्षे अपरोऽधमः न सत्यतायुक् च ।

तदा विफलमायोऽसौ, बन्दी मन्दीभवन्मतिः । श्रेष्ठीरूपं परित्यज्य, प्राह साहसवानिदम् ॥१४०॥ युग्मम् ॥

प्रगे दास्ये प्रगे दास्ये, भोजनं भोस्तवेत्यहम् । मासं प्रतारितोऽनेन, कृपणेन महीपते ! ॥ १४१ ॥

मितंपचस्य तेनास्य, श्वपचस्येव संपदः । अभोग्या भोग्यतां नेतुं, देवताराधनं व्यधाम् ॥ १४२ ॥

देवीप्रसादमासाद्य, सद्योरूपं प्रपद्य च । श्रेष्ठिनोऽस्य तनोमि स्म, कमलाः सफला व्ययात् ॥ १४३ ॥

ततः सूतः स्तुतः सर्वैः, साधु साधु व्यधायि भोः ! । एतत्कार्पण्यरोगस्य, कः परस्त्वां विना भिषक् ॥ १४४ ॥

वीतकोपेन भूपेन, बन्दी मुक्तोऽथ बन्धनात् । संप्राप्तधनशर्माणं, धनकर्माणमन्वशात् ॥ १४५ ॥

भोक्तव्यं च प्रदेयं च, कर्त्तव्यो नैव सञ्चयः । कीटिकासञ्चितं धान्यं, तित्तिरिः पश्य भक्षयेत् ॥१४६॥

एवमुक्त्वा गते भट्टे, प्रहृष्टः श्रेष्ठ्यगाद्गृहम् । विकटात्सङ्कटान्मुक्तः, कामं को वा न मोदते ॥१४७॥

दुष्टानां शङ्कनीयाय, धनसारसुताय सः । कनीयसे कनीं प्रादादुत्सवाद्गुणमालिनीम् ॥ १४८ ॥

अथापृच्छ्य महीपादीन्, धन्यो राजगृहं ययौ । षड्भिः प्रियाभिः श्रीराग, इव भाषाभिरावृतः ॥ १४९ ॥

सानन्दं श्रेणिकोर्वीशकृतप्रावेशिकोत्सवः । प्रविवेश पुरं धन्यः, पौरप्राथितगौरवः ॥ १५० ॥

सोमश्रीकुसुमश्रीभ्यां, षड्भिस्ताभिश्च सोऽन्वभूत् । योगीव सिद्धिभिः सौख्यमग्र्यं पत्नीभिरष्टभिः॥१५१॥

स खलु न बुभुजे यद् भूरिभाग्यो विदेशेऽप्यसुखयुजिनकीर्तिश्रीसखीभोगिभङ्गी-
सुरवर इव रेजे यत्प्रियाष्टाश्च राजोपपदगृहपुरे तद्बुध्यतां दानतेजः ॥ १५२ ॥ (मालिनी)

इति श्रीतपागच्छनायकश्रीसोमसुन्दरसूरिविनेयश्रीजिनकीर्तिसूरिप्रज्ञोपक्रमे श्रीधन्यचरित्रशालिनि श्रीदानकल्पद्रुमे कन्याचतुष्टयपरिणयनराजगृहप्रवेशवर्णनो नाम सप्तमः पल्लवः ॥ ७ ॥

## अथाष्टमः पल्लवः

अथाऽभयकथामात्तविमुक्तामनुसन्दधे । चण्डप्रद्योतभूपात्तन्मुक्तियुक्तिप्रकाशिनीम् ॥ १ ॥

लेखहारी लोहजङ्घः १ शिवाग्रमहिषी वरा २। अग्निभीरू रथो दिव्यो३ऽनलगिर्याह्वयो गजः ४ ॥ २ ॥

रत्नैरेतैः स्फुरच्चत्वाः, सत्त्वाच्र्यः सर्वभूभुजाम्, दन्तैरैरावत इव, प्रद्योतोऽद्योतताऽधिकम् ॥ ३ ॥

राजाज्ञयाऽन्यदा दूतो, गतो भृगुपुरे मुहुः । दिनेनैकेन यो गन्ता, पञ्चविंशतियोजनीम् ॥ ४ ॥

असौ गतागतैः शीघ्रैरुद्वेजयति नः सदा । तदेनं हन्म इत्यन्तर्दध्युर्भृगुपुरीजनाः ॥ ५ ॥

शंबले मोदकांस्तस्मै, तेऽदुर्मेदुरदोर्हृदाः । क्षुधार्तोऽपि स नाभुङ्क्त, निषिद्धोऽशकुनैः पथि ॥ ६ ॥

स राज्ञे तददाज्जाताशङ्कश्चाह पथः कथाम् । भूपपृष्टोऽथ पाथेयमाघ्रायेत्यभयोऽवदत् ॥ ७ ॥

अत्रास्ते दृग्विषो राजन्!, द्रव्यसंयोगजः फणी । बम्भणीमि ऋतं नो चेद्वने मुक्त्वा परीक्षय ॥ ८ ॥

तथाकृते पथा येन, यातं नागेन कानने । जन्तवस्तरवश्चास्य, दृशा दग्धास्ततोऽखिलाः ॥ ९ ॥

तुष्टोऽस्मि त्वद्धिया बन्ध-मोक्षं मुक्त्वा वरं वृणु। राज्ञेत्युक्तेऽभयः स्माह, भाण्डागारे वरङ्कुरु ॥ १० ॥

अथाधीतान्यविद्याया, गीतविद्याविशारदम् । पुत्र्या वासवदत्तायाः, राजा मृगयते गुरुम् ॥ ११ ॥
अवोचत्सचिवः सर्वगान्धर्वागमपारगः । अस्त्येक एवोदयनः, श्रीशतानीकनन्दनः ॥ १२ ॥
गीतेन मोहयन्नागान्, वने बध्नात्यनागसः । असौ नित्यमुपायात्तु, बध्वा सोऽप्यत्र नीयते ॥ १३ ॥
कटवस्त्रमयो ह्यन्तःस्थितैश्चारभटैः क्रियाः । गजो गत्यादिकाः कुर्वन्, सत्यवद् भ्राम्यते वने ॥ १४ ॥
तदन्तःस्थैर्भटैस्तत्र, सास्त्रैर्गीतरसादिव । आसीदद्भिः स बध्येत, गायँस्तद्व्यसनी नृपः ॥ १५ ॥
इति बद्ध्वानीत इह, स कन्यां शिक्षयिष्यति, ततो राजाज्ञया मन्त्र्यप्येतत्सर्वमचीकरत् ॥ १६ ॥
असत्यमपि सत्यं तं, गजं ज्ञात्वा वनेचराः । शतानीकसुतायाख्यन्, सोऽपि तं बन्धुमागमत् ॥ १७ ॥
गायन्नसावुपसृतैः, कृत्रिमेभभटैर्द्रुतम् । वीणाभृदेकको बद्ध्वाऽवन्तीशाय मुदार्पितः ॥ १८ ॥
तमायातं नृपः प्राहाऽध्यापय त्वं सुतां मम । गान्धर्वं किन्तु नालोक्या, काणाक्षी लज्जते ह्यसौ ॥१९॥
गुरुः कुष्ठी त्वया नेक्ष्यः, कन्यामप्येवमूचिवान् । सोऽनयोर्जवनीं प्रादादन्तरे गुरुशिष्ययोः ॥ २० ॥
तामथाध्यापिपद्वत्सराजो गान्धर्वमद्भुतम् । साऽपि सम्यग् निजधिया, विनयादग्रहीदिदम् ॥ २१ ॥

कीदृगेष विलोकेऽहमितिचिन्तापरां च ताम् । सोऽन्यदाध्यापयन् प्राह, काणेऽधीषे न किं पटु ॥ २२ ॥
साप्युवाच किमात्मीयं, कुष्ठं धृष्ट! न पश्यसि। सशङ्कौ तौ पटीं क्षिप्त्वा, मिथोरूपमपश्यताम् ॥ २३ ॥
अहो सौभाग्यसर्वस्वमिति प्रेमाऽमृतप्लुतौ । हा राज्ञा वञ्चितावावामित्यन्तःखेदविप्लुतौ ॥ २४ ॥
मिथोऽनुरक्तौ तौ धात्र्या, जुष्टौ काञ्चनमालया, अन्यैरज्ञातदाम्पत्यौ, गमयामासतुर्दिनान् ॥ २५ ॥
मदादुन्मूलितालानोऽन्यदाऽनलगिरिः पुरे। महावातात्पोत इवानङ्कुशः सागरेऽभ्रमत् ॥ १६ ॥
कथं भवेदसौ वश्यो, गजो मद्राज्यजीवनम् । राज्ञेत्युक्ते वत्सराजगीतेनेत्यभयोऽवदत् ॥ २७ ॥
प्रद्योतानुज्ञया वत्सराजो वासवदत्तया । युतो वशमथानिन्ये, गीतगानेन तं गजम् ॥ २८ ॥
अभयाय पुना राजा, तुष्टचेता वरं ददौ। तथैव न्यासं तं चक्रेऽभयोऽपि प्रतिभानिधिः ॥ २९ ॥
गान्धर्वगोष्ठीमारेभे, वनेऽन्येद्युर्मुदा नृपः । यौगन्धरायणोऽप्येत्य, तदा मन्त्री मदाज्जगौ ॥ ३० ॥
यदि तां चैव तां चैव, तां चैवायतलोचनाम् । न हरामि नृपस्यार्थे, नाहं यौगन्धरायणः ॥ ३१ ॥
प्रद्योतोऽपि व्रजन् श्रुत्वा, तत् क्रुद्धः शमितोऽमुना । भावज्ञेन प्रदर्श्योर्द्ध्वमूत्रणात्स्वं ग्रहाश्रितम् ॥३२॥

गीतविद्याकलां द्रष्टुं, ततः प्रद्योतभूपतिः । आकारयामास वने, वत्सराजं सुतां च ताम् ॥ ३३ ॥
ऊचे वासवदत्तां च, वत्साधीशस्तदा सुधीः । आरुह्येभीं वेगवतीं, गन्तुं कालोऽस्ति नो किल ॥ ३४ ॥
तयाप्यानायिता तत्र, कक्षाबन्धे रराम सा । तदाकर्ण्य निमित्तज्ञः, कोप्यन्धः स्माह सस्मयम् ॥ ३५ ॥
गत्वैषा योजनशतं, नूनं त्यक्ष्यत्यसूनिति । ततश्चतस्रस्तन्मूत्रघट्योऽस्याः पार्श्वयोः कृताः ॥ ३६ ॥
वत्सराजो घोषवती-पाणिर्वासवदत्तिका । वसन्तः काञ्चनमालाऽध्यारोहन्नथ हस्तिनीम् ॥ ३७ ॥
यौगन्धरायणकृतसंज्ञया स व्रजन्नृपः । क्षत्राचारधुरीणः स्वं, ज्ञापयामासिवानिति ॥ ३८ ॥
वासवदत्ता काञ्चनमाला च वसन्तकाख्यहस्तिपकः । वेगवती घोषवती नीयन्ते वत्सराजेन ॥३९॥ (आर्या)
पृष्ठेऽमुञ्चन्नलगिरिं, प्रद्योतोऽपि प्रकोपतः । पञ्चविंशतियोजन्यामामिलत्स द्विपः पथि ॥ ४० ॥
एका मूत्रघटी तत्र, स्फोटिता वत्सभूभुजा । मूत्रं जिघ्रन् स्थितो हस्ती, प्रेरितोऽपि भटैः क्षणम् ॥४१॥
अन्या अपि मूत्रघटी मार्गे तावति तावति । स्फोटं स्फोटं वत्सराजो, रुरोध पथि तद्गतिम् ॥ ४२ ॥
गत्वा शतं योजनानां, प्राविशद्वत्सपत्तनम् । वत्सराजस्तदा श्रान्ता, क्षणाद्वेगवती मृता ॥ ४३ ॥

देयाऽन्यस्मै तु कन्येयं, नान्यो ह्यस्माद्वरो वरः । इति मन्त्रिगिरा राजा, वत्सेशाय कनीं ददौ ॥ ४४ ॥
प्रदीपनमथान्येद्युरग्नेश्छिन्नमभूत्पुरि । अवन्तीशेन पृष्टश्चाभयोऽवक् तत्प्रतिक्रियाम् ॥ ४५ ॥
अग्निरेवौषधं ह्यग्नेरित्यशाम्यत्तथैव सः । पुनस्तेन वरं दत्तं, न्यासीचक्रेऽभयः सुधीः ॥ ४६ ॥
अवंत्यामशिवं किञ्चिदन्यदा समजायत । प्रद्योतेन तत्प्रशान्त्यै, पृष्टोऽभाषत चाऽभयः ॥ ४७ ॥
सर्वा विभूषिता देव्योऽभ्यायान्त्वास्थानसद्मनि । दृष्ट्या जयति या देवं, देव्या क्षेप्यो बलिस्तया ॥४८॥
शिवयाथ कृते तत्र, रोगशान्तिर्बभूवुषी । राजा तुर्यं वरमदात्, ययाचे चाऽभयोऽपि तान् ॥ ४९ ॥
शिवाङ्कगस्त्वयि मिण्ठीभूतेऽनलगिरौ स्थितः । विशाम्यहमग्निभीरुरथदारुकृतां चिताम् ॥ ५० ॥
विषण्णश्चण्डप्रद्योतो, वरान् दातुमशक्नुवन् । कृताञ्जलिर्विससर्ज, मगधाधीशधीसखम् ॥ ५१ ॥
धिया स्वयं विमोच्य स्वं, चण्डप्रद्योततोऽभयः । योगीन्द्र इव संसारात्, परां निर्वृतिमासदत् ॥ ५२ ॥
ततस्तत्कृतसत्कारः, पुरे राजगृहेऽव्रजत् । अभयः श्रेणिकोर्वीशनिर्मितागमनोत्सवः ॥ ५३ ॥
प्रमोदं मगधक्ष्मापः, आप स्वापत्यसङ्गमे । क्षीरोद इव पीयूषमयूखाभ्युदयेऽधिकम् ॥ ५४ ॥

श्रीमन्तमन्यदा धन्यमनन्यसदृशं गुणैः । धीनिधानं नृपः पश्यन्, प्रधानमभयं जगौ ॥ ५५ ॥

धियाऽत्यंतीतया नूनं, महामात्य ! त्वया समम् । अयं धन्यः सतां मान्यो, गाहते तुल्यकक्षताम् ॥५६॥

अनेन खलु विश्वेषां, विश्वे भूमिभृतामपि । इन्दुनेवांशुभिर्बुद्धिगुणैरुपकृतिः कृता ॥ ५७ ॥

अनेन खलु मे राज्यं प्राज्यं महिमभिर्बभौ । तेजस्विनां प्रधानेन, निधानेनेव भूतलम् ॥ ५८ ॥

अनेन खलु ताः सर्वा, राजधान्योऽप्यलंकृताः । भाग्यलक्ष्मीसखेनैव, मुखेनेव वपुःश्रियः ॥ ५९ ॥

अनेन खलु निर्गत्य, विदेशेऽपि स्वदेशवत् । कस्यापि श्रेयसः पाकाद् भुक्ता भोगसुखश्रियः ॥ ६० ॥

अनेन खलु भाग्यासधनेन विगलद्धनाः । नैकशोऽप्यकृतज्ञाः स्वभ्रातरः प्रौढिमापिताः ॥ ६१ ॥

अनेन खल्वसौनीवृत्सर्वावन्तिगतेत्वयि । सोमेन द्यौरिव रवौ, प्रोषितेऽद्योतताधिकम् ॥ ६२ ॥

धन्यश्लाघामिति श्रुत्वा, मगधाधीशितुर्मुखात् । गुणानुरागिणां धुर्यो, मन्त्री सम्मदमासदत् ॥ ६३ ॥

ततो नित्यं महामात्यो, धन्येन प्रेयसा स्वसुः । श्रीदेनेवेश्वरः सख्यसौख्यं भेजे विशिष्य सः ॥ ६४ ॥

अथ धन्याग्रजा धन्य-ग्रामेषु सकलेष्वपि । स्वस्याज्ञां स्थापयन्ति स्माऽभाग्यरेखामिवोत्कटाम् ॥ ६५॥

ग्रामेषु शनिदृष्ट्येव, संश्रितेषु तदाज्ञया । ववर्ष न तदा मेघो, वर्षन्नप्यपरक्षितौ ॥ ६६ ॥
वर्षाभावे ततः सर्वे, लोका ग्रामान्तरं ययुः । वृक्षतः फलराहित्ये, वृक्षान्तरमिव द्विजाः ॥ ६७ ॥
तृण्याधान्यक्षये तेषां, गजाश्वादि व्यपद्यत । सरसां सलिलाभावे, यथा यादःकदम्बकम् ॥ ६८ ॥
देहमात्रधना यावत्कौशाम्ब्यां ते ततो गताः । तावत्तत्र पितुर्वेश्माप्यकस्माद्भस्मसादभूत् ॥ ६९ ॥
ऋद्धिः शनैः शनैरेति, निर्याति युगपत्पुनः। षष्ठ्या पलैर्जलैः पूर्णा, रिच्यते यद् घटी क्षणात् ॥ ७० ॥
आजीविकाकृते तेऽथ, गता मालवमण्डलम् । समयं गमयन्ति स्म, कियन्तं कृषिकर्मभिः ॥ ७१ ॥
अवाहयन् वृषान् पृष्ठ्यान्, ग्रामाद् ग्रामं पुरात् पुरम्। निर्भाग्या लाभमिच्छन्तोऽन्यदा राजगृहं गताः ७२
गोधूमगोणीरुत्तार्य, स्थिता धान्यचतुष्पथे । न च लाभमवापुस्ते, सर्वत्राऽवहितो विधिः ॥ ७३ ॥
अन्यद्विचिन्त्यते लोकैर्भवेदन्यदभाग्यतः । कर्णे वसति भूषार्थोत्कीर्णे दारिद्रिणां मलः ॥ ७४ ॥
धन्योऽन्येद्युर्नृपसभादागच्छन् पृतनावृतः । अद्राक्षीत्क्षीणलक्ष्मीकान्, दुर्दशान् स्वसहोदरान् ॥ ७५ ॥
ताड्यमानान्निजभटैर्मार्गदानाय कम्बया । अपसारयतो धान्यगोणीर्द्रुततरं भिया ॥ ७६ ॥ युग्मम् ॥

ईदृक्किमिति संभ्रान्तस्वान्तः स्वान्तरभक्तितः । तानाकार्य गतः सौधं, धन्यः सौजन्यसागरः ॥ ७७ ॥
स्नानाङ्गरागवस्त्राद्यैः, सत्कृत्याथ स्वबान्धवान् । पृष्ट्वा स्वरूपं ज्ञात्वा च, धन्यस्तानित्यभाषत ॥ ७८ ॥
इयं लक्ष्मीरिदं सौधमिमेऽश्वा द्विरदा इमे । इमे रथा इमे ग्रामा, भवतामेव लात तत् ॥ ७९ ॥
शस्यते नैव सा लक्ष्मीर्या न बन्धूपयोगिनी । अब्धिवेलेव तीरस्थतृषार्त्तानुपकारिणी ॥ ८० ॥
स्वर्णसंपत्तिवन्मेरोः, सा न मे रोचते रमा । परितो भ्राम्यतो मित्रस्यापि यानुपकारिणी ॥ ८१ ॥
अनुगृह्णीत मां पूज्यास्तिष्ठतात्र रमा इमाः । सफलीकुरुत स्वैरं, त्यागभोगैस्ततश्चिरम् ॥ ८२ ॥
तेऽप्यूचुस्ते लघोर्मध्ये, स्थास्यामो न वयं यतः । सहस्रांशुर्न किं नीचः, षोडशार्चिगृहे वसन् ? ॥ ८३ ॥
ततस्त्रयाणां भ्रातॄणां, चतुर्दश चतुर्दश । धन्यो वदान्यकोटीरः, स्वर्णकोटीरदान्मुदा ॥ ८४ ॥
गुणैर्धन्यस्य दोषैश्च, तेषां लोकाश्चमत्कृताः । बाहुमुत्तम्भ्य वादीन्द्रा, इव न्यास्थन्निदं मिथः ॥८५॥
मात्सर्यं निःस्वता चैषां, कोटिप्राप्तमिदं द्वयम् । बन्धुस्नेहो वदान्यत्वं, धन्यस्येदं द्वयं पुनः ॥ ८६ ॥
स्वकीयं परकीयं वा, धनं वाञ्छन्ति जन्तवः । विश्राणयन्त्यरिभ्योऽपि, ये ते जगति दुर्लभाः ॥ ८७ ॥

धनं लात्वाऽथ गच्छन्तो, वित्ताधिष्ठायकैः सुरैः। द्राग् मुद्गरकरै रुद्धास्ते वीरैस्तस्करा इव ॥ ८८ ॥
उक्ताश्च ते सुरैरेवं, रे रे निर्भाग्यशेखराः!। भाग्यप्राप्यस्य हेम्नोऽस्य, न यूयं भोगमर्हथ ॥ ८९ ॥
धन्यात्मा धन्य एवासां, श्रीणां भोक्ता यथेप्सितम्। तरङ्गिणीनां सर्वासां, रत्नाकर इव ध्रुवम् ॥ ९० ॥
व्यावृत्तास्ते गता गेहं, धन्यमेवमवादिषुः। त्वमेव भाग्यवान् वत्स!, निर्भाग्या वयमेव हि ॥ ९१ ॥
इयन्तं समयं ज्ञातो, नास्माभिर्मत्सरान्वितैः। महिमा ते जगन्मित्र!, तामसैरिव पक्षिभिः ॥ ९२ ॥
भाग्याढ्येन त्वया स्पर्धं, ही व्यधाम मुधा वयम्। शारदेनार्कबिम्बेन, यथा खद्योतपोतकाः ॥ ९३ ॥
धन्येन सोदराः सर्वे, सादरं सत्कृतास्ततः। त्यागभोगादिभिः श्रीणां, विलेसुर्वीतमत्सराः ॥ ९४ ॥
आकार्य सत्कृतौ भक्त्या, धन्येन पितरौ तदा। औदार्यं पितृभक्तिश्च, महतां हि कुलव्रतम् ॥ ९५ ॥
ख्यातात्मा क्ष्मापजामाता, मातापितृसहोदरैः। अन्वितोऽन्वभवत्सौख्यं, धन्यो मान्यो गुणोत्करैः ९६
धर्मघोषाभिधः सूरिर्दूरिताऽहस्तमोभरः। विश्वप्रकाशकृत्तत्रान्यदा सूर्य इवागमत् ॥ ९७ ॥
पौरा दौरात्म्यनिर्मुक्ता, मुक्ता गौराशयं गुरुम्। धनसारादयो जग्मुर्भक्तिसारा नमस्यितुम् ॥ ९८ ॥

दानाद्यो धर्मभेदा, ह्युद्भेदाः सर्वसंपदाम् । प्रत्येकं विधिना श्राद्धा! राद्धाः कल्पद्रुमन्त्यमी ॥ ९९ ॥
जिनाज्ञा यावदाराद्धा, तावदेवाप्यते सुखम् । विराद्धा तु भवेद्यावत्तावद्दुःखमपि स्फुरेत् ॥ १०० ॥
श्रुत्वेति धनसारोऽथ, शिरस्यारोपिताञ्जलिः । निजचेतोगतानेतानप्राक्षीत्संशयानिति ॥ १०१ ॥
भगवन्? कर्मणा केन, धन्योऽयं तनयो मम । अत्यद्भुतानां सर्वासां, संपदामभवत्पदम्? ॥ १०२ ॥
ज्यायांसो धनदत्ताद्या, विद्वांसोऽपि ममात्मजाः । निःस्वाः पुनः पुनः किं स्युः,? संपदं प्रापिता अपि १०३
किमु योगे वियोगे च, धन्येनैषां क्रमाद्रमाः ? । भवेयुर्न भवेयुश्च, वह्निनैवायसां प्रभाः ॥ १०४ ॥
शालिभद्रस्वसाऽप्येषा, सतीरेखा मृदं किमु । अवहत्सहमानार्कतापशीतादिवेदनाः ? ॥ १०५ ॥
वाचं वाचंयमाधीशः, प्रोवाच शुचिताञ्चिताम् । एतेषां प्राग्भवान् भद्र!, शृणोत्वत्रावहितो भवान् १०६
प्रतिष्ठानपुरे काचिदासीद्दासीव दुःखिता । स्थविरा विश्वदारिद्र्यनिर्यासैरिव निर्मिता ॥ १०७ ॥
पेषणं खण्डनं भूमिमण्डनं चापि कुर्वती । परगेहेषु सा सेहे, देहे दुःखं स्ववृत्तये ॥ १०८ ॥
अवदाताशयो दाता, सुतोऽस्या विनयी नयी । लोकानां वत्सरूपाणि, चारयामास वृत्तये ॥ १०९ ॥

कस्मिन्नप्युत्सवेऽन्येद्युः, परमान्नं गृहे गृहे । सस्पृहेणामुना दृष्टं, भुज्यमानं शिशुव्रजैः ॥ ११० ॥
तस्याङ्गणास्थितस्यासीद्दंष्ट्राणां गलनं तदा । भक्ष्यकारशुनेर्यद्वद्वरभक्ष्यनिरीक्षणात् ॥ १११ ॥
सोऽवदत्स्वगृहे गत्वा, मातः ! पायसभोजनम् । घृतखण्डादिसंयुक्तं, यच्छ मे सुतवत्सले ! ॥ ११२ ॥
सा प्राह पायसं वत्स !, कथं स्यान्निर्धनस्य ते ? । सोचे यथा तथा देहि, सदसज्ज्ञः शिशुर्न यत् ११३

बालको १ दुर्जन २श्चौरो ३, वैद्यो ४ विप्रश्च ५ पुत्रिका ६ ।
अर्थी ७ नृपो ८ऽतिथि ९ र्वेश्या १०, न विदुः सदसद्दशाः ॥ ११४ ॥

सा भृशं याचिता तेन, धनेन रहिताऽरुदत् । बालानामबलानां च, गदितं रुदितं बलम् ॥ ११५ ॥
अथैयुः प्रातिवेश्मिक्यः, श्रुत्वा तद्रुदितं द्रुतम् । तद्दुःखदुःखिताश्चाख्यन्, किं रोदिषि ? वद स्वसः ! ११६
यथास्थितमथावादीत्सा दीनवदना ततः । ताभिस्तस्यै दयार्द्राभिः, क्षीरखण्डादिकं ददे ॥ ११७ ॥
तया प्रगुणितं भोज्यं, प्राज्यमाज्यादिसंस्कृतम् । माता सुतहिताधाने, न हि तावद्विलम्बते ॥ ११८ ॥
पायसं बालकस्यास्य, पर्यवेषि तया रयात् । दृग्दोषशङ्कया स्नेहाद्गेहान्तरमगामि च ॥ ११९ ॥

इतश्च श्रमणः कश्चिन्मासक्षपणपारणे । तस्य गेहाङ्गणं प्राप, पापसन्तापनाशनः ॥ १२० ॥

उल्ललास मुनिं दृष्ट्वा, दानभावः स्वभावतः । बाल्येऽपि वर्त्तमानस्य, तस्य कल्पतरोरिव ॥ १२१ ॥

मुनये विनयेनाथ, प्रणिपत्य स कृत्यविद् । परमान्नं परान्नोऽपि, प्रददौ गतदौर्हृदः ॥ १२२ ॥

आनन्दभरतो दानं, दत्त्वा सत्त्वाधिकः शिशुः । अनुमोदनयाऽभीक्ष्णं, तदनन्तगुणं व्यधात् ॥ १२३ ॥

वेगात्तदाऽऽगता माता, मा तावत् क्षुधितः शिशुः । उत्थादिति पुनस्तस्मै, पायसं पर्यवेषयत् ॥१२४॥

स भुज्यमानादप्यन्नात्तद्दत्तं बह्वमन्यत । व्यापार्यमाणादप्यर्थाद्वृद्धिन्यस्तं यथा धनी ॥ १२५ ॥

ततो भोगफलं कर्म, शर्म्महेतुं निबध्य सः । मृत्वा विसूचिकादोषाद्धन्योऽयं त्वत्सुतोऽजनि ॥ १२६ ॥

मुनिदानप्रभावेण, यशसां महसामसौ । संपदामङ्कुरानां च, सञ्जातः किल मन्दिरम् ॥ १२७ ॥

त्रयाणामथ पुत्राणां, ज्यायसां प्राग्भवं भवान् । कृतकर्मपरीणामवैचित्र्यं च शृणोत्विह ॥ १२८ ॥

आसन्नासन्नधामानो, ग्रामे सुग्रामनामनि । त्रयः क्षयगतद्रव्या, वयस्याः कुलपुत्रकाः ॥ १२९ ॥

तेऽन्यदा वन्यदारूणां, ग्रहणाय वनान्तरे । गृहीतशम्बलाः सर्वे, कम्बलावरणा ययुः ॥ १३० ॥

क्षमासारः क्षमासारमुनिस्तत्र तदाऽऽययौ । संसारवारणं कर्तुं, मासक्षपणपारणम् ॥ १३१ ॥
दुष्कर्म्मतानवात्सर्वे, जातसद्दानवासनाः । मुनये विनयेनैते, शम्बलं सकलं ददुः ॥ १३२ ॥
सायं संगृह्य दारूणि, क्षुधिता एव तद्दिनम् । अथाऽऽगमन्नमी ग्राममनुतापपरा इति ॥ १३३ ॥
इहैव नः फलं जातं, क्षुद्बाधा मुनिदानतः । प्रेत्य किं भावि ? नो विद्मो, हा मुधा वञ्चिता वयम् ॥१३४॥
दानं दत्त्वा चतुर्वेलमेवं सत्त्वविवर्जिताः । पश्चात्तापं व्यधुर्मूढास्ते च काले मृतास्त्रयः ॥ १३५ ॥
ज्यायांसो धनदत्ताद्या, अभवन् भवतः सुताः । धनसार ! भ्रमन्तोऽपि, धनसारविवर्जिताः ॥ १३६ ॥
दानं दत्त्वाऽपि निःसत्त्वा, यदमी अन्वशेरत । इहाभूवँस्ततो निःस्वा, नीता अप्यसकृत् श्रियम् ॥१३७॥
सर्वथा दानधर्मस्य, नाशो नैव भवेदिति । धन्येन सह युक्तानां, श्रीरेषां भवति स्थिरा ॥ २३८ ॥
तथा--प्रायेणाखण्डनिष्कम्पाऽनुकम्पाऽध्यवसायतः । शिशोः खण्डयितुं दुःखं, खण्डतण्डुलकादि तत् १३९
याभिः पुरा पुरन्ध्रीभिर्दत्तं किंचानुमोदितम् । धन्यस्याष्टापि ताः पत्न्योऽभवन्नेताः श्रियां पदम् १४० युग्मम्
सुभद्रयाऽनया प्राच्य-भवे निजसखी रुषा । मृत्तिकां वह रे दासीत्याक्रोशि विभवाढ्यया ॥ १४१ ॥

एनसः परिपाकेन, तस्येहोढा मृदोऽनया । शालिभद्रभगिन्याऽपि, न नाशः कर्मणां यतः ॥ १४२ ॥

उक्तं चान्यैः—इतैकनवते कल्पे, शक्त्या मे पुरुषो हतः । तत्कर्मणो विपाकेन, पादे विद्धोऽस्मि भिक्षवः

श्रुत्वैवं जातसंवेगा, वेगाच्चारित्रमाश्रयन् । केऽपि केऽपि च सम्यक्त्वं, गृहिधर्ममथापरे ॥ १४४ ॥

सदारो धनसारोऽथ, ज्यायःपुत्रत्रयान्वितः । ऊरीचक्रे परिव्रज्यां, दूरीकृतपरिग्रहः ॥ १४५ ॥

धन्यः प्रियान्वितः श्राद्धधर्म्मं कर्मनिसूदनम् । प्राप्य नत्वा मुनीन् भक्त्या, सद्म निश्छद्मधीरगात् १४६

गुरुकथितपुराणजन्मदानस्मरणपटुर्विदधद्विशिष्य धर्मम् ।

निजगुरुजनबान्धवान् स्तुवानस्तपसि रतान् व्यलसत्सुखैः स धीमान् ॥१४७॥ पुष्पिताग्रावृत्तम्

धन्यस्य दातुमनसोऽसहनोपभोगाद्यद्रक्षिताः सुरवरैरपि हैमकोट्यः ।

दानस्य पश्यत बुधा ! जिनकीर्त्तितानि, तानि प्रकीर्णकफलानि सुखोज्वलानि ॥१४८॥ (वसन्ततिलका)

इति श्रीतपागच्छनायकपरमगुरुश्रीसोमसुन्दरसूरिशिष्यश्रीजिनकीर्त्तिसूरिप्रज्ञोपक्रमे श्रीधन्यचरित्रशालिनि

श्रीदानकल्पद्रुमे बान्धवप्रीतिप्राग्भववर्णनो नामाष्टमः पल्लवः ॥ ८ ॥

---

# अथ नवमः पल्लवः

इतश्च वणिजः केऽपि, गृहीत्वा रत्नकम्बलान् । नेपालनीवृतो राजगृहे राजगृहे ययुः ॥ १ ॥
श्रेणिकक्षोणिपालाय, दर्शिता रत्नकम्बलाः । वणिग्भिः स्वर्णलक्षं च, मूल्यं तेषां प्रकाशितम् ॥ २ ॥
तेषामर्घमिति श्रुत्वा, राजा विस्मितमानसः । प्राह नाहममून् भूरिमूल्यान् लास्यामि कम्बलान् ॥३॥
गजाश्वनररत्नानां, सङ्ग्रहः स्वर्णकोटिभिः । सङ्ग्रामे विजयं दत्ते, कम्बलाः किंबलाः पुनः ?॥ ४ ॥
श्रुत्वेति क्षोणिपालस्य, वाणिं वाणिज्यकोविदाः । विच्छायवदनाः शालेः, श्रीशालि सदनं ययुः ॥५॥
आशु प्रदर्शयामासुर्भासुरान् रत्नकम्बलान् । शालिभद्रस्य मातुस्ते, षड्भिरभ्यधिकान् दश ॥ ६ ॥
स्वर्णलक्षा बहूर्दत्वा, भद्रा जग्राह कम्बलान् । आर्पिपच्च वधूटीभ्यः, पाटयित्वांह्रिमार्ष्टये ॥ ७ ॥
इतश्च किममी नात्ता, मदर्थं रत्नकम्बलाः । राज्ञीतिचिल्लणा राज्ञी, कोपाटोपमपोषयत् ॥ ८ ॥
तज्ज्ञात्वाज्ञापि राज्ञाऽपि, वेत्री भद्र ! व्रज द्रुतम् । वणिग्भ्य एकं रैलक्षाद्रत्नकम्बलमानय ॥ ९ ॥
धात्रीशवचसा वेत्री, गतो वाणिज्यकारकान् । उवाच याचते भूपो, ह्येवं मूल्येन कम्बलम् ॥ १० ॥

औरभ्रवाणिजा एवमुक्ता वाणीमभाणिषुः । भद्र! श्रीशालिभद्रस्य, माता तानाददेऽखिलान् ॥ ११ ॥
वेत्रीत्युक्तो धरित्रीशं, गत्वा सर्व न्यवेदयत् । राज्ञाऽथ पुनराज्ञप्तः, शालिभद्रगृहं गतः ॥ १२ ॥
अभ्यर्थयत मूल्येन, स भद्रां रत्नकम्बलम् । साऽप्याख्यत् पाटयित्वा तैः, स्नुषाणां प्रोञ्छिताः पदाः॥१३॥
तच्छ्रुत्वा विस्मितोऽत्यन्तं, स भूपाय व्यजिज्ञपत् । चमत्कृतोऽथ शृण्वानः, शालेर्लीलाद्भुतं नृपः ॥१४॥
भूपादेशात् पुनर्द्वाःस्थः, शालेरालयमागतः । भद्रां स्माह नरेन्द्रः श्रीशालीभद्रं दिदृक्षते ॥ १५ ॥
साऽपि गत्वा नृपायाख्यत्सुकुमारः सुखोचितः । बहिर्नैति सुतो जातु, स्वाम्यायातु स्वयं गृहान् ॥ १६ ॥
शालिसौधादथारभ्य, दिव्यैर्मण्डपतोरणैः । भूस्थस्वर्गोपमं राजगृहं राजगृहावधि ॥ १७ ॥
गोभद्रनिर्मितोदारस्फारशोभं मुहुर्मुहुः । पश्यन् नृपतिराश्चर्योत्फुल्ललोचनमानसः ॥ १८ ॥
भृशमुत्कण्ठितो द्रष्टुं, लीलावैभवमद्भुतम् । शालेर्दिव्यश्रियं प्रापत्, प्रासादं सपरिच्छदः॥१९विशेषकम्
तोरणत्रितयं तस्य, प्रवेशे भूभृदैक्षत । सौवर्णकलशज्योतिर्द्योतिनीलाश्मनिर्मितम् ॥ २० ॥
प्रविशन्निश्रिकायाऽसौ, तत्र स्फाटिककुट्टिमम् । अम्बुभ्रमकरं मन्त्रिक्षिप्तपूगध्वनिश्रुतेः ॥ २१ ॥

ततो दिव्यमणिस्तम्भचन्द्रशालामनोरमम् । आवासं मगधाधीशः, प्रविवेश तमद्भुतम् ॥ २२ ॥

शालिभद्रजनन्याऽथ, जननाथः स सत्कृतः । तुरीयभूमौ सौधस्य, सिंहासने निवेशितः ॥ २३ ॥

गत्वा भद्राऽथ सप्तम्यां, भूमौ तनयमाख्यत । आगच्छ वत्स! स्वावासे, विद्धि श्रेणिकमागतम् ॥ २४ ॥

आलपत् शालिभद्रोऽपि, कथनीयं किमत्र मे? । गृहाण श्रेणिकं पण्यं, स्वयमेव यथोचितम् ॥ २५ ॥

ऐश्वर्यलीलामालोक्य, स्वसूनोर्भुवनाद्भुताम् । जहर्ष जननी बाढमहो लीलापतिः सुतः ॥ २६ ॥

श्रेणिको वत्स ! नः स्वामी, न क्रयाणकमोहि तत् । एवं स भणितो मात्रा, दूनो मात्राधिकं हृदि २७

दध्यौ स्वामी ममाप्यस्ति, सोऽपि तुल्यकरक्रमः । पुण्यैर्मेऽद्यापि चेन्यूनिस्तत्तान्येव तनोम्यहम् ॥२८॥

चिन्तयन्निति मात्राऽथ, निन्ये भूमीभुजोऽन्तिके । विनयी स नतो भूपमुत्तमानां ह्ययं क्रमः ॥ २९ ॥

स्नेहेन स निजोत्सङ्गं, भूभुजा स्थापितः क्षणम् । अस्य श्वासोष्मणा जातः, क्षरत्स्वेदजलाविलः ॥ ३० ॥

भूमीभुजा विसृष्टोऽथ, स क्षणं सप्तमं गतः । लोकान्तमिव भव्यात्मा, मुक्तो मोहेन तत्क्षणम् ॥ ३१ ॥

क्षमापमस्थापयद् भद्रा, भोजनाय जनान्वितम् । भ्रश्यन्ति न महान्तो हि, स्वोचितप्रतिपत्तितः ॥ ३२ ॥

दिव्यैर्गोभद्रगीर्वाणदत्तैर्विविधवस्तुभिः । सज्जयामास तत्कालं, नव्यां रसवतीमसौ ॥ ३३ ॥

निष्णातैः स्नप्यमानस्य, भूपस्य करतश्च्युता । रुष्टकान्तेव कूपान्तः, पपात मणिमुद्रिका ॥ ३४ ॥

स्फुटाऽभून्मुद्रिका कूपे, यन्त्रैः कृष्टेषु वारिषु । तीव्रैस्तपोभिः पापेषु, चेतनेव परात्मनि ॥ ३५ ॥

अलङ्कारोच्चये राजा, मुद्रारत्नं व्यलोकत । महेभ्यनागराभ्यर्णे, निःस्वं ग्राम्यमिवागतम् ॥ ३६ ॥

दासीमाह महीपालः, कस्यैषा सदलङ्कृतिः ? । सा स्माह शालिभद्रस्य, निर्माल्यं नः प्रभोरिदम् ॥३७॥

तच्छ्रुत्वा विस्मितो राजा, गृहीत्वा मुद्रिकां निजाम् । स्नानानुलिप्तसर्वाङ्गः, प्राप्तो भोजनमण्डपम् ॥३८॥

दिव्या रसवती नव्या, भद्रया परिवेषिता । राज्ञे सपरिवाराय, नानाव्यञ्जनसंयुता ॥ ३९ ॥

भूपालोऽपूर्वमालोक्य, वस्तु बालोचितक्रियः । किमिदं किमिदं वेति, पप्रच्छ निजपूरुषान् ॥ ४० ॥

भुक्त्वोत्थितोऽथ वस्त्राद्यैर्दिव्यैस्तैस्तैः स सत्कृतः । परिवारसखः स्मेरविस्मयो धाम जग्मिवान् ॥ ४१ ॥

इतश्च वैभारगिरौ, श्रीवीरः समवासरत् । हरन्मोहतमःस्तोममुदयाद्राविवांशुमान् ॥ ४२ ॥

शालिस्तमागतं पुण्यवासनाशालिमानसः । केकीव जलदं श्रुत्वा, विवेकी मुमुदेतमाम्॥ ४३ ॥

आर सारपरीवारः, सदलङ्कारवारभृत् । स वैभारगिरिं नन्तुं, भक्तिसंभारतो जिनम् ॥ ४४ ॥
पीयूषयूषसध्रीचीः, स गिरः पारमेश्वरीः । पीत्वा भवदवोद्भूतं, सन्तापं निरवापयत् ॥ ४५ ॥
द्विगुणीभूतसंवेगः, प्रभुं नत्वा स वेगतः । आजगाम निजं धाम, कामस्थामनिबर्हणः ॥ ४६ ॥
जननीं व्याजहारैवं, स निर्व्याजमनास्ततः । मातः ! सञ्जातसंवेगः, प्रतिपत्स्ये मुनिव्रतम् ॥ ४७ ॥
मात्रा मात्राधिकं स्नेहान्मोहात्कान्ताभिरान्तरात् । शालिः प्रज्ञाप्यमानोऽपि, न व्यंरसीद्व्रताशयात् ४८
एकैकामन्वहं नारीं, स्मरस्य नगरीमिव । मोहस्थानमिवैकैकमौज्झत्पल्यङ्कमप्यसौ ॥ ४९ ॥
इतश्च शालिभद्रस्य, सुभद्रा भगिनी तदा । ग्रथाति वेणीमेणीदृग्, भर्तुर्धन्यस्य मूर्धनि ॥ ५० ॥
तस्या दृग्भ्यां तदा पेतुः, कवोष्णा अश्रुबिन्दवः । धन्यस्कन्धद्वये चित्तस्वस्थताशून्यबिन्दवः ॥ ५१ ॥
धन्यः पप्रच्छ किं सुभ्रु ! भवत्या बाष्पविप्रुषः । अकाण्डे पेतुरुत्पातजलदाम्बुकणा इव ॥ ५२ ॥
साऽगदद्गद्गदं बाला, शालिर्मे सोदरः सुखी । व्रतं जिघृक्षुरेकैकं, प्रत्यहं त्यजति प्रियाम् ॥ ५३ ॥
हसित्वा साहसत्त्वाब्धिर्धन्यः स्माह तवाग्रजः । कातरोऽनुनयैषीव, क्रमात्त्यज्यति वल्लभाः ॥ ५४ ॥

अदीर्घसूत्रता सुभ्रु !, प्राणा हि प्रथमे नृणाम् । कार्यसिद्धेः सात्त्विकाना, तात्त्विकाना विशिष्य तु ५५
श्रुत्वेति स्वपतेः सर्वा, गर्वाध्माता गिरः पराः । दयिता मिलिताः स्माहुः, शालिवैराग्यविस्मिताः ॥ ५६ ॥
प्राणितेश ! स्वपाणिभ्यां, सुतरः सागरः परम् । पुम्भिरुम्भितसद्ध्यानैरपीदं दुष्करं तपः ॥ ५७ ॥
जीवाः क्लीबा अपीह स्युर्गेहेशूराः सहस्रशः । स्वल्पा एव परं धीरा, वीरसंहरणे रणे ॥ ५८ ॥
प्रगल्भते न को दीक्षाशिक्षादानाय मानवः । वह्निपानमिव स्वामिन् !, व्रतादानं तु दुष्करम् ॥ ५९ ॥
एतन्नेतर्व्रतं चेद्वः, प्रत्यभात्सुखदं हृदि । भोगान् रोगानिव त्यक्त्वा, तत्स्वयं किं न सेव्यते ? ॥ ६० ॥
जगौ धन्यो निशम्येति, श्रेयसीः प्रेयसीर्गिरः । भाग्यानि मे सुसौभाग्या ! दिष्ट्या सम्प्रत्यऽजागरुः ॥६१॥
उपश्रुतिमिवादाय, भवतीनां गिरं शुभाम् । प्रपद्येऽहं व्रतं कान्ताः ! शान्ता यूयमपि स्त भोः ॥ ६२ ॥
इत्युदीर्य सुधीर्यच्छन्नाश्चर्यं योगिनामपि । पत्नीरपि व्रतादानसावधाना व्यधादसौ ॥ ६३ ॥
स श्रीप्रपञ्चान् ग्रामाणां, त्रिपञ्चानथ तान् शतान् । रथेभाश्वगृहाट्टानां, पञ्च पञ्च शतानि च ॥ ६४ ॥
वणिक्पुत्रसहस्राणि, पञ्च पोतशतानि च । सप्तभूमगृहानष्टौ, प्रेयसीर्गोकुलानि च ॥ ६५ ॥

सुवर्णकोटीर्निधिषु, व्यवसायेषु वृद्धिषु । षट्पञ्चाशत् षट्पञ्चाशत्प्रमिताश्च प्रतिष्ठिताः ॥ ६६ ॥

हाटकस्याष्टाष्टकोटीरष्टानां च मृगीदृशाम् । कोष्ठागाराणि धान्यानां, तथा शतसहस्रशः ॥ ६७ ॥

मनश्चिन्तितसर्वाङ्गभोगभाङ्गिप्रदायिनीम् । चिन्तामणीं मणीनन्यानप्यनर्घ्यां च कोटिशः ॥ ६८ ॥

सार्थवाहनरेन्द्रार्हा, अपरा अपि भूयसीः । ऋद्धीः स्वजनमित्रादिसंपदोऽपि च तादृशीः ॥ ६९ ॥

तत्क्षणं तृणवत्सर्वं, त्यक्त्वा सत्त्वाधिकस्ततः । प्रतस्थे व्रतमादातुं, चिरयन्ति न सात्त्विकाः ॥ ७० ॥

॥ सप्तभिः कुलकम् ॥

श्रियः पुण्यं रुचः सूर्यं, यथा सत्त्वं च सिद्धयः । तथा धन्यं प्रियाः सर्वा, अनुजग्मुः पतिव्रताः ॥७१॥

तत् श्रुत्वाऽऽकस्मिकं स्मेरविस्मयैरभयादिभिः । धीमद्भिरपि स श्रीमाननिवार्यव्रतोद्यमः ॥ ७२ ॥

दीनादिभ्यो ददद्दानं, याप्ययानं श्रितः क्षणात् । दान्ताऽऽत्मा वीरपादान्तं, तदैवाऽऽगात् प्रियान्वितः ७३

॥ युग्मम् ॥

अहो एतस्य वैराग्यमहो निस्सङ्गरङ्गता । अहो सत्त्वमहो तत्त्वदृष्टिरित्यद्भुताऽऽकुले ॥ ७४ ॥

पौरलोके सति श्रुत्वा, तद्वृत्तं क्रमतस्ततः। लीलाशालिव्रते शालिः, संवेगादौत्सुकायत ॥७५॥ युग्मम् ॥
प्रज्ञाप्य जननीं युक्त्या, विहाय प्रेयसी रयात्। विषमिश्रान्नवद्रौद्राभोगान् भोगान्विमुच्य च ॥७६॥
श्रीश्रेणिकनरेन्द्रेण, गोभद्रेण च तावता। कृतव्रतोत्सवः शालिरप्यवापज्जिनान्तिकम् ॥७७॥ युग्मम् ॥
दीक्षितौ श्रीजिनेन्द्रेण, द्वावपीमौ महामुनी। तप्यमानौ तपस्तीव्रं, चिरं मह्यां विजह्रतुः ॥ ७८ ॥
एकादशाङ्गीसूत्रार्थाध्ययनैकपरायणौ। अचिरेणैव तौ जातौ, गीतार्थौ मुनिपुङ्गवौ ॥ ७९ ॥
एकद्वित्रिचतुर्मासक्षपणादितपो मुनी। द्वादशाब्दीमिमौ तप्त्वा, प्राप्तौ राजगृहं पुरम् ॥ ८० ॥
अनुत्सुकावनुत्सेकौ मासक्षपणपारणे। श्रीवीरं तावनुज्ञायै, विनयेन प्रणेमतुः ॥ ८१ ॥
जगाद सादरं वीरः, शालिभद्रं विलोकयन्। भाविनी जननी तेऽद्य, वत्स! पारणकारणम् ॥ ८२ ॥
निशम्येति गतौ धन्यशाली राजगृहं मुनी। भद्राऽऽवासं च संप्राप्तौ, श्रीजिनेशवचोवशात् ॥ ८३ ॥
प्रददे तत्र धर्माशीः, किन्तु नोच्चैर्न सादरम्। तस्थे च प्राङ्गणे ताभ्यामन्यभिक्षाचरोचितम् ॥ ८४ ॥
पदं नैकं पुरोऽस्थातां, नाख्यातां चापरं पदम्। अकृषातां पुनर्मौनमिमौ सर्वार्थसिद्धिदम् ॥ ८५ ॥

तदा च दध्यौ भद्राऽहो, मम भाग्यानि जाग्रति । सुतः सुतापतिश्चाद्य, यज्जिनेन सहागतौ ॥ ८६ ॥
नत्वा निमन्त्रयिष्येऽथ, भक्तपानैर्मुनी मुदा । इति हर्षाश्रुरुद्धाक्षी, भद्राऽद्राक्षीन्न तौ तदा ॥ ८७ ॥
परावर्त्तितरूपत्वादीर्ष्ययेव तपःश्रिया । शालिर्नालक्षि कान्ताभिरपि दृष्टिपथस्थितः ॥ ८८ ॥
क्षणं स्थित्वा प्रतस्थाते, व्रतस्थाचारपारगौ । आकारस्य विकारं तौ, नैवादर्शयतां पुनः ॥ ८९ ॥
स्थानान्तरनिराकाङ्क्षौ, गिरा वीरजिनेशितुः । मुनी गोचरचर्याया, ववलाते शमान्वितौ ॥ ९० ॥
अदर्शिषातामाभीर्या, तावीर्यासमितौ मुनी । प्रणम्य प्रीतमनसा, दध्ना च प्रतिलाभितौ ॥ ९१ ॥
शालिरुत्पन्नसंशीतिशङ्कुसङ्कुलहृज्जिनम्। नत्वा जगौ मम स्वामिन्!, पारणं मातृतः कथम् ? ॥ ९२ ॥
दिदेशाथ जगन्नाथः, शालिभद्रं मुने! तव । प्राग्जन्मजननी सैषा, दधिदानं यया कृतम् ॥ ९३ ॥
स्वप्राग्भवं जिनाख्यातं, शालिः क्षालितकश्मलः । श्रुत्वा द्विगुणसंवेगः, सधन्यः पारणं व्यधात् ९४
भागवत्याः स भारत्याः, शालिभद्रः स्मरन्नथ । स्वचेतसि तदा दध्यावेवं भवविरक्तधीः ॥ ९५ ॥
क्व मे ग्रामेयकत्वं तत्सद्विवेकविनाकृतम्? । गुणगौरं क्व पौरत्वमिदं गौरवमन्दिरम् ? ॥ ९६ ॥

पशुदासस्तदाऽभूवं, निवासः सकलाऽऽपदाम् । राजानमप्यधुना तु, जानामि स्म क्रयाणकम् ॥ ९७ ॥
अहो मोहनटेनैते, देहिनो भवनाटके । नाट्यन्ते विविधैर्वेषैः, कर्मराजस्य शासनात् ॥ ९८ ॥
मोहं कृतजगद्द्रोहं, जित्वा मल्लमिवोत्कटम् । गृह्णाम्यप्राप्तपूर्वां तद् द्रुतं जयपताकिकाम् ॥ ९९ ॥
विमृश्येति जिनं नत्वा, महासत्त्वाधिकेन सः । धन्येन सह वैराग्याद्वैभारगिरिमीयिवान् ॥ १०० ॥
श्रीगौतमगुरोः पार्श्वे, विधायाराधनाविधिम् । पादपोपगमं नामानशनं तौ मुदाश्रितौ ॥ १०१ ॥
इतो भद्रा द्रुतं पुत्रजामात्रागमनोत्सवे । भृत्यैरकारयत्सौधं, स्वस्तिकादिश्रियाऽद्भुतम् ॥ १०२ ॥
भद्रया सह तीर्थेशं, नन्तुं शालिप्रियास्ततः । कृशाङ्ग्यश्चारुनीरङ्ग्य–श्चेलुश्चन्द्रकला इव ॥ १०३ ॥
भम्भासारोऽपि भूपालः, सान्तःपुरपरिच्छदः । श्रीवीरस्य नमस्यायै, प्राचलद्विमलाशयः ॥ १०४ ॥
जिनं प्रदक्षिणीकृत्य, नमस्कृत्य च भक्तितः । सर्वेऽपि शुश्रुवुः पापहारिणीमार्हतीं गिरम् ॥ १०५ ॥
शून्यं जामातृसूनुभ्यां, भद्रा वीक्ष्यार्हतः सदः । पप्रच्छ किं न दृश्येते धन्यशालिमुनी प्रभो ! ॥१०६॥
जगौ जिनस्त्वदावासाद्, वलितौ प्राग्भवाम्बया । धन्यया कारितावेतौ, मासक्षपणपारणम् ॥ १०७ ॥

श्रुत्वा स्वप्राग्भवं शालिर्धन्येन सह धीमता । इदानीमेव वैभारे, पादपोपगमं श्रितः ॥ १०८ ॥
शालिभद्रप्रिया भद्रा, श्रेणिकः सचिवोऽभयः । श्रुत्वेति दुःखिताः प्रापुर्वैभारं धरणीधरम् ॥ १०९ ॥
शिलातले शयानौ तौ, वीक्ष्य भद्रा स्नुषान्विता । रुरोद तारं दुःखार्त्ता, रोदयन्तीतरानपि ॥ ११० ॥
नाजीगणं गणनया, भिक्षुकस्याप्यहं हहा । सुतं जामातरं चौकःप्राप्तौ कल्पद्रुमाविव ॥ १११ ॥
इतिश्रीश्रेणिको भद्रां, विषादविषमूर्च्छिताम् । निजैर्वचनपीयूषैः, सचैतन्यामतन्तनीत् ॥ ११२ ॥
महतां महनीयाऽसि, मानिनीयासि मानिनाम् । वृथा मा स्म कृथाः शोकं, भद्रे वीरप्रसूरसि ॥ ११३ ॥
श्लथयित्वा ततः शोकं, भद्राऽपि मुनिपुङ्गवौ । प्रणम्य भावतो धाम, जगाम सवधूजना ॥ ११४ ॥
अनुत्तरसुखागारे, विमानेऽनुत्तरे ततः । सर्वार्थसिद्धे तौ जातौ, मासान्ते त्रिदशोत्तमौ ॥ ११५ ॥
तौ त्रयस्त्रिंशतं वार्द्धीस्तत्र सौख्यश्रियोऽद्भुताः । भुक्त्वोत्पद्य विदेहेषु, मुक्तिलक्ष्मीमवाप्स्यतः ॥ ११६ ॥
अनुत्तरं दानमनुत्तरं तपो, ह्यनुत्तरं मानमनुत्तरं यशः । धन्यस्य शालेश्च गुणा अनुत्तरा, अनुत्तरं धैर्यमनुत्तरं पदम् ॥११७॥ ( इन्द्रवंशास्थवृत्तम् )

स्वभोगभङ्गी नृपतिः क्रयाणकं, स्वर्णं च निर्माल्यमभूत् स्त्रगादिवत् ।
नरेन्द्रमानेऽप्यपमानचिन्तनं, शालेर्महाश्चर्यमिदं चतुष्टयम् ॥ ११८ ॥ (उपजातिः)

सौभ्रात्रमग्र्यं विविधाश्च बुद्धयः, क्रये मृदादेरपि हेमसिद्धयः ।
कलासु कौशल्यमतीव शूरता, श्रियो विदेशेऽपि सुखैकसङ्गताः ॥ ११९ ॥

अपि प्रियानर्मगिरा व्रताद्वतिर्वणिक्जनत्वेऽपि नृपत्वसंपदः ।
इमानि धन्ये नितरामनुत्तराण्यष्टावपि स्पष्टतराणि विष्टपे ॥ १२० ॥ ॥ युग्मम् ॥ उपजातिः ॥

दानस्य विश्वातिशयेऽपि हि द्वयोः, स्तवीमि धन्यं सविशेषमेतयोः ।
प्रियाष्टकं यो युगपत्परित्यजन् बभूव शालेरपि सत्त्ववृद्धिदः ॥ १२१ ॥

## अथ प्रशस्तिः

आसंश्चन्द्रकुले पूर्वं, श्रीजगच्चन्द्रसूरयः । तपाख्याऽवापि यैर्यावज्जीवाचामाम्लकारिभिः ॥ १२२ ॥
तदन्वये जगत्ख्यातविशुद्धचरणक्रियाः । आसन् गुणाब्धयः श्रीमद्देवसुन्दरसूरयः ॥ १२३ ॥

तत्पट्टे विजयन्ते श्रीसोमसुन्दरसूरयः । भाग्यं गुणाः क्रिया येषां, रेखाप्राप्तानि जाग्रति ॥ १२४ ॥
तत्पादाम्बुजभृङ्गेण, सूरिश्रीजिनकीर्त्तिना । अयं धन्यकथाशाली, दानकल्पद्रुमः कृतः ॥ १२५ ॥

एषा सदोषाऽपि कृतिः स्वजातौ, पङ्क्तिं प्रपेदे विशदैरवाप्याम् ।
स्नात्वा चिरं पण्डितसिंहदेवधीदेवनद्यां श्रितशुद्धिलक्ष्मीः ॥ १२६ ॥ (इन्द्रवज्रा)

यस्यैतानि फलानि दिव्यविभवोद्दामानि शर्माण्यहो, मानुष्ये भुवनाद्भुतानि बुभुजे श्रीधन्यशालिद्वयी ।
देवत्वे पुनरिन्दुकुन्दविशदाः सर्वार्थसिद्धेः श्रियः, सोऽयं श्रीजिनकीर्त्तितो विजयते श्रीदानकल्पद्रुमः १२७

इति श्रीतपागच्छाधिराजश्रीपरमगुरुश्रीसोमसुन्दरसूरिविनेयश्रीजिनकीर्तिसूरिप्रज्ञोपक्रमे श्रीधन्यचरित्रशालिनि श्रीदानकल्पद्रुमे श्रीधन्यशालिसर्वार्थसिद्धिप्राप्तिवर्णनो नाम नवमः पल्लवः ॥ ९ ॥

समाप्तोऽयं ग्रन्थः

इदं पुस्तक मुम्बय्या शाह नगीनभाई घेलाभाई—जव्हेरीबजार इत्यनेन निर्णयसागरमुद्रणमन्दिरे कोलभाट-
वीथ्या २३ तमे गृहे बा. रा. घाणेकरद्वारा मुद्रयित्वा प्रकाशितम् ।

Published by Shah Naginbhai Ghelabhai Javeri, No 325 Javeri Bazar, and Printed by
B. R. Ghanekar, at N. S. Press, 23 Kolbhat Lane, Bombay.

इति श्रीजिनकीर्तिसूरिकृतः श्रीदानकल्पद्रुमः समाप्तः।

इति श्रेष्ठि-देवचन्द्र लालभाई-जैनपुस्तकोद्धार-ग्रन्थाङ्कः ९.